kwad's Oriental Series
shed under the Authority of
Maharaja Sayajirao University
of Baroda.

General Editor:
B. J. Sandesara,
M.A., Ph.D.

142

# आपस्तम्बश्रौतसूत्रीयं धूर्तस्वामिभाष्यम् ।

# ĀPASTAMBAŚRAUTASŪTRA DHŪRTASWĀMIBHĀSYA

## VOL. II

Edited by
Late Mahāmahopādhyāya Śāstraratnākara
Paṇḍita A. Chinnaswāmī Śāstrī
and
Paṇḍita P. N. Paṭṭābhirāma Śāstrī
*Reader in Sanskrit*
Calcutta University



सत्यं शिवं सुन्दरम्

ORIENTAL INSTITUTE
BARODA
1963

# FOREWORD

The second volume of the Āpastambaśrautasūtra with the Bhāṣya of Dhūrtaswāmī is now being presented to the world of scholars as no. 142 of the Gaekwad's Oriental Series.

The work was entrusted to Mm. Paṇḍita A. Chinnaswāmī Śāstrī who could prepare the press-copy of this volume upto page 91 only and unfortunately expired before completing it. Consequently the work was entrusted to his son-in-law Paṇḍita Paṭṭābhirāma, an equally erudite scholar to edit a Śrauta work of this type. He prepared the remaining presscopy exactly on the same lines and submitted it for publication.

The present volume of Āpastambaśrautasūtra contains Cāturmāsya, Paśuhautra, Cāturmāsyahautra and Prāyaścittas which are very rarely performed in these days. The learned editors have given in the foot-notes explanatory comments to elucidate the difficult portion of the Bhāṣya. The students of Mīmāṁsā and Sacrificial lore will certainly be benefited by them.

We acknowledge with thanks very valuable help rendered by Shri J. S. Pade, Research Officer, Oriental Institute, in seeing this volume through the press.

We are also thankful to the University Grants Commission and the Government of Gujarat for jointly giving full financial assistance in publishing this volume in the Gaekwad's Oriental Series.

ORIENTAL INSTITUTE
*Baroda*, 26-3-1963

B. J. SANDESARA
Director

॥ श्रीः ॥

# विषयानुक्रमः ।

॥ श्रीः ॥

# आपस्तम्बश्रौतसूत्रीयं धूर्तस्वामिभाष्यम् ॥

## अष्टमप्रश्ने प्रथमः पटलः

**अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भवति ॥ १ ॥**

चातुर्मास्यैरिष्टवान् चातुर्मास्ययाजी। तस्य चातुर्मास्ययाजिनः अक्षय्यं भवति सुकृतम्। [1]न शक्यं क्षपयितुमिति [क]अक्षय्यम्। शोभनं कृतं सुकृतम्। चतुर्षु मासेषु क्रियन्त इति चातुर्मास्यानि। तद्याजिनः पुण्यमक्षय्यं भवति। तदेतच्चातुर्मास्यानां फलम्। न चान्येषां कर्मणामानर्थक्यम्। अन्यथालक्षणस्य सुखविशेषस्य[ख] कर्मान्तरैरुपजननात्[2]। [ग]कर्मसमुदायनाम चातुर्मास्यानीति ॥ १ ॥

**फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा वैश्वदेवेन यजेत ॥ २ ॥**

[घ]फल्गुनीभ्यां युक्ता पौर्णमासी फाल्गुनी, तथा चैत्री। यस्माद्विश्वैर्देवैरग्निरिष्टः

---

1 B MS$_2$. reads न शक्यते

2 Ibid, उपादानात्

क. मोक्षरूपत्वान्नित्यमिति रामाग्निचित्। अल्पकालिकेन भोगेन क्षपयितुमशक्यं पुण्यमिति रुद्रदत्तः।

ख. अग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादीनामविशेषेण स्वर्गार्थत्वश्रवणेऽपि तत्र तत्तत्स्वर्गे स्वरूपतः कालतो वा विशेषं परिकल्प्योपपत्तिः क्रियते। तद्वदत्रापीति। 'फलस्य कर्मनिष्पत्तेः तेषां लोकवत् परिमाणतः फलविशेषः स्यात्' (जै. सू. ३.२.१७) इति महर्षिजैमिनिनाप्युक्तम्।

ग. वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाख्यानां मासचतुष्टयनिर्वर्त्यानां कर्मणां समुदायस्यैतन्नाम चातुर्मास्यानीति।

घ. अत्र न पूर्वयोः फल्गुन्योर्ग्रहणम्। "एषा वै जघन्या रात्रिस्संवत्सरस्य यत् पूर्वे फल्गुनी" इति तयोर्वत्सरान्तत्वश्रवणेन शिशिरर्तौ गणनीयत्वात् "वसन्ते वैश्वदेवेन यजेत" इत्यनेन विरोधापत्तेः। किन्तूत्तरे फल्गुन्यौ। तयोरेव वत्सरादित्वश्रवणात्—"एषा वै प्रथमा रात्रिस्संवत्सरस्य यदुत्तरे फल्गुनी" इति। अतस्तद्युक्तैव पौर्णमास्यत्र प्राप्नोति। फाल्गुनी हस्तयुक्तापि गृह्यते। तथा चैत्री स्वातीयुक्तापीति रामाग्निचित्।

कर्मसमुदायेनातोऽस्य संज्ञा वैश्वदेवमिति। "[क]यद्विश्वेदेवास्समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम्" इत्यस्य निर्वचनम्। तेन वैश्वदेवेन यजते। यस्यां पौर्णमास्यां वसन्तो भवति ॥ २ ॥

**पूर्वस्मिन् पर्वणि पञ्चहोतारं मनसानुद्रुत्याहवनीये सग्रहं हुत्वान्वारम्भणीयामिष्टिं निर्वपति वैश्वानरं द्वादशकपालं पार्जन्यश्च चरुम् ॥ ३ ॥**

इह पूर्वं पर्व चतुर्दशी, न पौर्णमासी, [ख]पौर्णमास्यामिज्यावचनात्। साकमेधेषु पौर्णमास्या विप्रकर्षात्। हुतेऽग्निहोत्रे सङ्कल्पः—चातुर्मास्यैर्यक्ष्ये, अक्षय्यं मे सुकृतं भवत्विति। ततो विहृत्याग्निं मनसा हूयते [1]सर्वः पञ्चहोता। तस्मिन्नग्नौ[2] परित्यक्तेऽन्वारम्भणीया। [3]विद्युदसि। ततो विहरणमग्न्यन्वाधानादि। उपदेशः—कृत्वा विद्युदसीमन्वारम्भणीया। [4]क्रतुसङ्कल्पः। कामः। पञ्चहोता। मनसा सग्रहः उपांशु। न पुनर्विद्युदसि। पुनर्विहरणमन्वारम्भणीयेति। पर्जन्याय जुष्टम्, पर्जन्य हव्यं रक्षस्व, पर्जन्याय वो जुष्टम्, पर्जन्यमावह, पर्जन्यस्याहम्, उभावाग्नेयविकारौ, अन्नादो भूयासमिति मन्त्राभिघारणाभिमर्शनचतुर्धाकरणानि क्रियन्ते ॥ ३ ॥

**"वैश्वानरो न ऊत्या, पृष्टो दिवि" इति वैश्वानरस्य याज्यानुवाक्ये। "पर्जन्याय प्रगायत दिवस्पुत्राय मीढुषे। स नो यवसमिच्छतु॥ अच्छा वद तवसं गीर्भिराभिः स्तुहि पर्जन्यं नमसा विवास। कनिक्रदद्वृषभो जीरदानू रेतो दधात्वोषधीषु गर्भम्" इति पर्जन्यस्य। हिरण्यं वैश्वानरे ददाति, धेनुं पार्जन्ये। सिद्धमिष्टिस्सन्तिष्ठते ॥ ४ ॥**

ब्राह्मणा इमे वो हिरण्यधेनू। उपदेशः—ब्राह्मणा हिरण्यं वैश्वानराय वो ददामि, धेनुं पर्जन्यायेति। तदङ्गत्वादन्वारम्भणीयापि ॥ ४ ॥

---

1 B. MS.$_1$ reads सर्वतः and 'क' reads सर्पिः

2 B. MS.$_1$ omits अग्नौ.

3 Ad MS. reads विद्युत्.

4 B. MS.$_1$ reads अथ before क्रतु.

क. मीमांसकैस्तु—विश्वेदेवदेवताकामिक्षायागघटितत्वात् समुदायस्यापि वैश्वदेव इति नाम छत्रिन्यायेन इत्युक्तम्। माधवाचार्यास्तु—उभयमङ्गीकुर्वन्ति। 'इज्यन्तेऽत्र यजन्ते वा विश्वेदेवा इतीदृशी। निरुक्तिः' इति वदन्तः।

ख. पूर्वस्मिन् सूत्रे पौर्णमास्यां यागवचनात् तत्पूर्वदिनस्य चतुर्दशीत्वावश्यंभावात् इह चतुर्दश्येव पूर्वपर्वशब्देनोच्यत इति।

**प्राचीनप्रवणे वैश्वदेवेन यजते ॥ ५ ॥**

प्राचीनप्रवणे 'अन्वारम्भणीयं [1]हविरिदमेषां मयि' इति। [क]अन्येषां "समे दर्शपूर्णमासाभ्याम्" इति विधिः। अतः प्राचीनप्रवणत्वविधानम्। [2]अनुदवसितस्यापि[ख] प्राचीनप्रवणा भूमिः क्रियते। वरुणप्रघासेषूदवसनविधानात् ॥ ५ ॥

**पशुबन्धवद्गार्हपत्यादग्निं प्रणयन्नोद्यतहोमं जुहोति ॥ ६ ॥**

त्यक्तेऽग्नावन्वारम्भणीयार्थे वैश्वदेवेन यक्ष्य इत्युक्त्वा विद्युदसि। ततः पशुबन्धवत्प्रणयनम्, प्रकृतिवद्वा। उपदेशस्सर्वत्रादौ विद्युदसि। उद्यतहोमस्य निवृत्तिः—"पूर्वे यत्सन्नपरो भवासि" इति [ग]लिङ्गात् ॥ ६ ॥

**"ऊर्णावन्तं प्रथमः सीद योनिम्" इति होतुरभिज्ञायाहवनीयायतन ऊर्णास्तुकं निधाय तस्यामग्निं प्रतिष्ठापयति ॥ ७ ॥**

अन्यसम्भारनिवृत्तिः[घ]। ऊर्णास्तुकैव शुक्ला, पेत्वस्यान्तरा शृङ्गीया, [च]परिसंख्यानात्। अतिमुक्त्यन्तं [छ]पूर्ववत्। [3]ततोऽग्न्यन्वाधानम्। वैश्वदेवं हविरिदमेषां मयीति। अपाशुकेऽ[4]प्यूर्णास्तुकेत्युपदेशः ॥ ७ ॥

---

1 B. MS.₂ omits इदमेषां मयि.

2 'क' reads असमवसितस्यापि.

3 'घ' reads अन्वाधानम्.

4 Ad omits अपि.

क. इतरेषां पर्वणां वरुणप्रघासाकमेधशुनासीरीयाणां प्रकृतौ "समे दर्शपूर्णमासाभ्यां यजेत" इति विहितः समदेशोऽतिदेशेन प्राप्नोतीति।

ख. अत्र वैश्वदेवे पर्वणि उदवसानानुदवसनयोर्नाग्रहः। उदवसनस्य वरुणप्रघास एव नियमनात्। प्राचीनप्रवणता तु मुख्यतयात्र विधीयते उदवसनतदभावसाधारण्येन। अतस्सैवात्र सम्पादनीयेति। उदवसनं पूर्वदेशं परित्यज्य स्थानान्तरगमनम्।

ग. पशौ प्रणयनानन्तरं विहित उद्यतहोमे यो विहितो मन्त्रः "तत्र पूर्वो यत्सन्नपरो भवासि" इति श्रूयते। तस्यायमर्थः—"यस्मादाहवनीयः पूर्वस्सन् अपरो भवासी" ति। आहवनीयस्य पूर्वापरभावः सत्येवोत्तरवेदिप्रणयने। प्रकृते चोत्तरवेद्यभावात् लिङ्गविरोधान्नोद्यतहोम इति।

घ. पाशुकप्रणयनेऽपि गुग्गुल्वादीनां सम्भाराणां निवृत्तिरिति।

च. पाशुकस्य प्रणयनस्यात्र विधानादेव तदङ्गभूतस्योर्णास्तुकानिधानस्यापि प्राप्तिसम्भवात् पुनस्तद्विधानं तदितराङ्गानि परिसङ्ख्ष्टे इति।

छ. See. आप. श्रौ. ७.७.२ for अतिमुक्तिहोम.

**नानुत्तरवेदिके पाशुकं प्रणयनं विद्यत इत्यपरम् ॥ ८ ॥**

अनुत्तरवेदिकवचनात् यत्रोत्तरवेदिर्वरुणप्रघासेषु महाहविषि च, तत्र नित्यं पाशुकं प्रणयनम्। इतरथा वैश्वदेववद्विकल्पस्स्यात् ॥ ८ ॥

**अग्नीनन्वाधाय शाखामाहृत्य वैश्वदेव्या आमिक्षाया वत्सानपाकरोति ॥ ९ ॥**

[क]अपूर्वमुपदिष्टमित्यन्वाधानादेः पुनरनुक्रमणम्। मध्येऽशननिवृत्त्यर्थम्। उपदेशः "विश्वेभ्यो देवेभ्यो देवभागम्" इत्यामावास्यं तन्त्रम्, शाखाधर्माणां [ख]पूर्वप्रवृत्तेः ॥ ९ ॥

**प्रसूमयं बर्हिः प्रस्तरश्च ॥ १० ॥**

पुष्पिता दर्भाः प्रसूमयाः। प्रस्तरस्य पुनर्विधानाच्चातुर्मास्यप्रकरणे बर्हिर्ग्रहणेन प्रस्तरो न गृह्यते। अतस्त्रेधा बर्हिस्सन्नद्धं भवतीति न प्रस्तरेण सह बध्यते। [1]तथाच [ग]यत्सान्तपनस्य बर्हिः तद्गृहमेधीयस्येति सान्तपनीयस्य सूक्तवाके प्रस्तरः प्रह्रियते। गृहमेधीये चान्य [2]आह्रियते। अन्यत्र तु[3] बर्हिर्ग्रहणेन गृह्यते। यथा शरमयं बर्हिरिति प्रस्तरोऽपि शरमय एव। केचिदाहुः—बर्हिर्ग्रहणेन [4]प्रस्तरग्रहणसिध्यर्थं पुनर्वचनमिति ॥ १० ॥

**त्रेधा सन्नद्धं पुनरेकधा तस्मिन् मन्त्रः ॥ ११ ॥**

---

1 'क' reads तदा.

2 'घ' reads आनीयते.

3 'घ' omits तु.

4 'ख' 'घ' read प्रस्तरस्य ग्रहण.

क. पूर्वं पाशुकप्रणयनविधानात् अनन्तरं प्रसूमयत्वादिविधानात् अपूर्वविहितैरेभिः प्राकृता अग्न्यन्वाधानादयो निवर्तन्त इति शङ्का स्यात्। तन्निवृत्त्यर्थमेव प्रकृतिसिद्धानामप्यन्वाधानादीनां पुनः पाठ इति। उपदेशमतं तु—अग्न्यन्वाधानानन्तरं वत्सापाकरणात्पूर्वं "पुरा वत्सानपाकर्तोरमावास्यायां जायापती अश्नीतः" (आप. श्रौ. ४.२.३.) इति प्राप्तस्य यजमानस्य प्रतिषेधार्थं प्राकृतानुक्रमणम्। अग्नीनन्वाधाय शाखामाहृत्य वत्सापाकरणमेव कर्तव्यम्, न मध्ये किञ्चिदिति।

ख. शाखाहरणादीनामामावास्यधर्माणां पूर्वमारब्धत्वात् प्रवृत्तिक्रमेण पुनरपि तेषामेव प्राप्तिरिति। see पू. मी. ५.१.५ for प्रवृत्तिक्रम.

ग. चातुर्मास्यप्रकरणे बर्हिश्शब्देन प्रस्तरस्य न ग्रहणम्। अतश्च सान्तपनगृहमेधीययोः बर्हिरेकत्वे विहितत्वेऽपि न तेन प्रस्तरैकत्वं सिध्यतीति सान्तपनीयप्रस्तरस्य तदीयसूक्तवाक एव प्रहरणम्। गृहमेधीयस्य तु प्रस्तरस्यान्यस्य ग्रहणमिति।

त्रेधा सन्नहने[1] मन्त्रः। त्रेधा तूष्णीं बध्यते। निधनबहुत्वेऽपि त्रिरेव सम्भरणम्, [2]एकीकृतत्वात्। "अलुभिता योनिः" इति प्रस्तरस्य सम्भरणम्। येषां बर्हिर्ग्रहणेन गृह्यते तेषां सह प्रस्तरेण बन्धनम्। प्रस्तरमन्त्रस्य लोपः ॥ ११ ॥

**तथेध्मस्त्रयोविंशतिदारुः ॥ १२ ॥**

तथेध्मः प्रसूमयः पुष्पितानां खदिराणां पलाशानां वा। त्रयोविंशतिदारुः सह परिधिभिः। परिधिभिस्सह सर्वं त्रेधा बध्यत इति पुनरुच्यते ॥ १२ ॥

**त्रीन् कलापान् सन्नह्यैकधा पुनस्सन्नह्यति पूर्ववत् ॥ १३ ॥**

त्रीन् कलापानिति। एकधा [क]पुनस्सन्नह्यति पूर्ववत्। एकधा सम्भरणस्यैव मन्त्रः। तदेव तु मन्त्रवत्सन्नहनम्[3]। उभयत्र केचित्। पूर्ववद्वैश्वदेव्याः सायं दोहं दोहयति वैश्वदेव्याः यथा प्राकृतो विधिः। प्रकृतौ यद्याहवनीये श्रपणमिहापि तथैव। येन मन्त्रेणाधिश्रिता कुम्भी इहापि स [4]एव मन्त्र इति। येषां कलापसन्नहने मन्त्रः एकधा सन्नहनेऽपि, न तु तेषां चोद्यः। [5]न ह्येष परमार्थः ॥ १३ ॥

**वैश्वदेव्यास्सायं दोहं दोहयति ॥ १४॥**

वैश्वदेव्यास्सायं दोहं दोहयति, [6]सान्नाय्यविकारत्वात्। 'विश्वेभ्यो देवेभ्यो हविरिन्द्रियम्, विश्वेभ्यो देवेभ्यो हव्यम्, विश्वेभ्यो देवेभ्यो दधि, विश्वेभ्यो देवेभ्यो हविः कृण्वन्त' इत्यूहः [ख]उपदेशेन[7]। प्रकृतिवदारण्याशनान्तम् ॥ १४ ॥

**इति प्रथमा कण्डिका**

---

1 Ad reads सन्नहनमन्त्रः

2 'क' reads एकीकृत्य.

3 *Ibid* सन्नहनमिति केचित्

4 'क' omits एव.

5 'घ' reads न त्वेषः

6 'क' reads साम्नाय्यवत्तद्विकारत्वात्.

7 Ad reads उपदेशः

क. त्रीन् कलापान् सन्नह्य, एकधा पुनस्सन्नह्यति पूर्ववत् इति सूत्रच्छेदः। वैश्वदेव्या इत्यादिसूत्रान्तरम्। अस्यायमर्थः—बर्हिस्सन्नहनवत् (८.१.११) इध्मस्यापि सन्नहनम्। अतश्चैकधा सन्नहनस्यैव मन्त्रवत्त्वमिति। केचित्तु-पूर्वेणादित्यस्योत्तरत्र सम्बध्य सन्नहनद्वयेऽपि मन्त्रप्रवृत्तिमिच्छन्ति। वैश्वदेव्याः पूर्ववत् प्रकृतिवत् सायं दोहः। प्रकृतौ यदि आहवनीये श्रपणं तदेहापि तत्रैव। तथा कुम्भ्यधिश्रयणेऽपि प्राकृत एव मन्त्र इति। नायं समुच्चितः पक्ष इति भाष्यकाराशयः।

ख. "उपवेषोऽसि यज्ञाय" इत्युपवेषकरणमन्त्रे "इन्द्राय हविः कृण्वन्तः" इति देवतासंबन्धाभिधानेन समवेतार्थत्वात् विकृतावन्द्रपदस्थाने विश्वेभ्यो देवेभ्य इत्यूहः कर्तव्य इत्युपदेशमतमिति।

**श्वो भूते पात्रसंसादनकाले पालाशं वाजिनपात्रं प्रयुनक्ति स्रुचं वा ॥ १ ॥**

श्वो भूते पात्रसंसादनकाले पृषदाज्यधानी [1]द्वितीयोपभृत् द्वे आज्यस्थाल्यौ। प्रातर्दोहपात्रान्ते वाजिनपात्रम्। न चास्य जुहूधर्मा [2]इहाबन्धनात्। [क]सूत्रकारेण पालाशग्रहणाच्च। अन्यत्र तु सर्वत्र सम्बध्नाति, [ख]शेषत्वात् वाजिनस्याप्रयोजकत्वात् ॥ १ ॥

**निर्वपणकाल आग्नेयमष्टाकपालमिति यथासमाम्नातमष्टौ हवींषि निर्वपति ॥ २ ॥**

यथासमाम्नातं [3]राजसूये नैव पाठक्रमेण। अष्टावेव हवींषि। यद्यपि द्वयोः पात्रयोरामिक्षा ध्रियते, तथाप्येकं हविरामिक्षा ॥ २ ॥

**तेषां पौष्णान्तानि पञ्च सञ्चराणि ॥ ३ ॥**

सञ्चरन्ति पर्वचतुष्टयमिति पञ्चसञ्चराणि ॥ ३ ॥

**पिष्टानां पौष्णं श्रपयति ॥ ४ ॥**

पिष्टानां तण्डुलानां पौष्णश्चरुः, [ग]सर्वत्रादन्तकत्वात्। अग्नये जुष्टं निर्वपामि, सोमाय [4]जुष्टम् इत्यादि समानम्। सवित्रे, सरस्वत्यै, पूष्णे, मरुद्भ्यः, द्यावापृथिवीभ्याम्, अग्ने हव्यं रक्षस्वेति समानम्। [5]सोम, सवितः, सरस्वति, पूषन्। मरुतो हव्य ᳫ रक्षध्वम्, द्यावापृथिवी हव्य ᳫ रक्षेथाम्। तण्डुलप्रक्षालननिनयने कृते यथाभागं व्यावर्तध्वमिति चरुपुरोडाशीयानां विभागः। व्यावर्तेथामित्युपदेशः। यत्र द्वेधावस्थानम्[6]। पुरोडाशार्थानामभिमर्शनम्—इदमग्नेः, सवितुः, पूष्णः, मरुतां, द्यावापृथिव्योः। इदं सोमस्य सरस्वत्या इति

1 Ad omits द्वितीय.
2 'क' reads निबन्धनात्.
3 'घ' 'ङ' read राजसूये तेनैव.
4 'क' reads जुष्टं निर्वपामीत्यादि.
5 B. MS.$_2$ reads सोम हव्यं सवितर्हव्यं, सरस्वति हव्यं, पूषन् हव्यम्.
6 Ibid, अवस्थापनम्

क. जुहूधर्मकत्वपक्षे पालाशत्वम् प्राप्नोत्येवेति पालाशग्रहणमनर्थकं स्यादिति।

ख. प्रधानस्यैव धर्मप्रयोजकत्वम्। वाजिनस्य तु अङ्गत्वात् तदप्रयोजकत्वम्। अतोऽपि न पालाशत्वादयो जुहूधर्मा इति।

ग. "पूषा प्रपिष्टभागः अदन्तको हि" इत्युक्तस्यादन्तकत्वरूपहेतोस्सर्वत्राविशेषादत्रापि पिष्टप्राप्तिरिति।

[1]चर्वर्थानाम्। ततः कृष्णाजिनादानादि, अग्नये जुष्टमधिवपामि, सवित्रे जुष्टमधिवपामि, मरुद्भ्यो जुष्टमधिवपामि, द्यावापृथिवीभ्यां जुष्टमधिवपामि, "धान्यमसि धिनुहि देवान्" इत्यधिवापः। एवं संवापः, जुष्टादुत्तरं संवपामि इति क्षेपः। "अग्नये जुष्टं संवपामि" इति। एवमुत्तरत्रापि। उपदेशोऽधिवापसंवापयोस्समासेन। अग्नये सवित्र इति। जुष्टादि समानम्। तण्डुलानामुत्पवने कृते पौष्णार्थचरोरुपदेशेन[2] विभागः। यथाभागं व्यावर्तेथामिति, इदमग्नेः, सवितुः, मरुतां, द्यावापृथिव्योः, इदं पूष्णः, पिष्टानामेव धर्मोऽसीत्यधिश्रयणमिति। यथाभागं व्यावर्तेथामिति तु न्यायः। चरोरिवास्य पाकः। पुरोडाशवत्पिण्डं कृत्वा कपालेऽधिश्रयणं मन्त्रेण, स्थाल्यां कपालधर्मिण्यां क्षिप्यते। व्यावर्तध्वमिति आग्नेयमपच्छिद्य व्यावर्तेथामिति चरुं बहुवचनेन द्वावपच्छिद्य पुरोडाशावुत्तमौ द्विवचनेन [3]विभजति। इदं सोमस्य, इदं सरस्वत्या इति चर्वोरपि कृत्वा इदं मरुतां, इदं द्यावापृथिव्योरित्युत्तमयोः[क] ॥ ४ ॥

## तप्ते प्रातर्दोहे सायं दोहमानयति ॥ ५ ॥

एवं क्रमेणाधिश्रित्य स्वकाले कृते प्रातर्दोहे मारुतमधिश्रित्य तप्ते प्रातर्दोहे सायं दोहानयनम्। पश्चादेककपालस्याधिश्रयणम्। [4]सर्वपुरोडाशानामधिश्रयणोत्तरकालमित्युपदेशः[ख]। पुरोडाशमधिश्रित्यामिक्षावत्पयस्यां करोतीति निर्देशात्। सर्वे पुरोडाशधर्माश्चरुषु[5]। अर्थलुप्तस्य निवृत्तिः प्रथनश्लक्ष्णीकरणपरितपनाभिज्वलनाभ्यूहनादेः। [ग]चरुगतासु यजुरुत्पूतासु अधिश्रयणं पुरोडाशवत्। [घ]यावदुक्ताः पुरोडाशधर्मा इत्युपदेशः ॥ ५ ॥

---

1 B. MS.$_1$ चर्वर्थयोः

2 'घ' reads चरोःपुनरुप.

3 B. MS.$_2$ adds सर्वपुरोडाशानामधिश्रयणोत्तरकालमित्युपदेशः before विभजति.

4 B. MS.$_2$ omits सर्वेत्यादि उपदेश इत्यन्तम्

5 B. MS. reads चरौ तु.

क. पुरोडाशयोरभिमर्शनमिति शेषः।

ख. सोमे सवनीयहविर्निर्वापप्रकरणे "इन्द्राय पुरोडाशम्, मित्रावरुणाभ्यां पयस्याम्" इति पठितम्। तत्र यथापाठमेव चाधिश्रयणं प्राप्नोतीति पुनः 'पुरोडाशमधिश्रित्यामिक्षावत्पयस्यां करोति' (आप. श्रौ. १२.४.११) इति विधानादवगम्यते सर्वपुरोडाशाधिश्रयणानन्तरमेवामिक्षाकरणमिति। अतश्चैककपालपुरोडाशमप्यधिश्रित्यान्ते आमिक्षाकरणमित्युपदेश इति।

ग. अत्र चरुपाकार्थपात्रमुच्यते चरुशब्देन। पात्रगतासु 'अन्या वा यजुषोत्पूय' (आप. श्रौ. १.२४.४) इत्यादिविधानात्पूतास्वप्सु तण्डुलानां मन्त्रेणाधिश्रयणमिति।

घ. उत्पवनादीनां केषाञ्चित्सम्भवत्प्राप्तिकानामपि पुनः पाठादितरेषां निवृत्तिरित्युपदेशः।

**यत्संवर्तते सामिक्षा। यदन्यत्तद्वाजिनम् ॥ ६ ॥**

[1]कठिनभावेन यत्संवर्तते सा आमिक्षाद्रव्यम्। यदन्यत्तद्वाजिनम् ॥ ६ ॥

**पशुवत्सम्प्रैषः। तथाज्यानि ॥ ७ ॥**

सम्प्रैषकाले प्राप्ते पशुवदित्यस्सम्प्रैष इत्युपदेशः। आज्यान्यपि पशुवत् ॥ ७ ॥

**पृषदाज्ये विकारः। महीनां पयोऽसीति पृषदाज्यधान्यां द्विराज्यं गृह्णाति द्विर्दधि सकृदाज्यम् ॥ ८ ॥**

"महीनाम्" इत्यनेनैव द्विराज्यं गृह्यते। दधि द्विः सकृदाज्यम्। पञ्चकृत्वो महीनां पयोऽसीति। [क]त्रिरुपदेशः। [2]अत्र नित्यो दधिसंस्कारः। आग्नेयसावित्रसारस्वतपौष्णानामभिमन्त्रणाभिघारणादि आग्नेयवत्। तूष्णीमितरेषाम्। प्रातर्दोहवदामिक्षायाः ॥ ८ ॥

**उद्वासनकाल आमिक्षां संहृत्य द्वयोः पात्रयोरुद्धृत्य वाजिनैकदेशेनोपसिञ्चति ॥ ९ ॥**

मारुतमुद्वास्यामिक्षां संहृत्य वाजिनं कृत्वा तामेव द्वयोः पात्रयोः कृत्वा वाजिनेन सिञ्चति। [3]न [ख]ह्यनुद्वासितायाः कार्त्स्न्येनोद्धरणं [4]शक्यते कर्तुम्। यथैव [ग]मेषयोर्लोमशत्वम्। [5]केचिदनुद्वास्योद्धृत्यैकस्मिन् पात्रे आमिक्षामेकस्मिन् [6]पात्रे वाजिनम्। पश्चादेककपालस्योद्वासनम्। [7]ग्रहकद्वययुक्तैका[घ] पात्री ॥ ९ ॥

---

1 Ad. MS. reads कर्कशभागेन.
2 B. MS.₂ reads केचिन्नित्यं दधिसंस्कारमाहुः
3 Ad MS. adds उद्वास्योद्धरणाद्यामिक्षायाः before नहि.
4 Ad MS. reads कर्तुं शक्यते.
5 'क' reads केचिदुद्वास्य.
6 Ad MS. omits पात्रे.
7 'क' reads ग्रहकैर्युक्ता.

क. ग्रहणस्याप्यसंस्कारत्वात् दध्नोऽप्रधानत्वेन प्रधानभूताज्यग्रहण एव मन्त्र इत्युपदेशमतम्।

ख, ग. उद्वासनकालेऽनैडकीभिरूर्णाभिर्मेषप्रतिकृती लोमशौ कुरुतः (आप. श्रौ. ८.६.११) इति करम्भनिर्मितयोर्मेषयोर्लोमशकरणं विहितम्। तत्रैकादशसु कपालेषु मेषीमधिश्रयति अष्टासु मेषम्' (आप. श्रौ. ८.६.५.) इतिकृताधिश्रयणयोर्मेषयोरुद्वासनमकृत्वा लोमशत्वसम्पादनं यथा दुश्शकं तद्वदनुद्वासिताया आमिक्षायाः कार्त्स्न्येनोद्धरणं दुश्शकमिति।

घ. पौष्णद्यावापृथिव्ययोः हविषोर्धारणार्थमियं पात्री।

**अलङ्करणकाल आज्येनैककपालमभिपूरयत्याविः पृष्ठं वा कृत्वा व्याहृतिभिर्हवींष्यासादयति ॥ उत्करे वाजिनम् ॥ १०, ११ ॥**

आमिक्षावाजिनवर्जमलंकृत्यालङ्करणमन्त्रेण[क] पूरयत्येककपालम् । भूर्भुवस्सुवरित्यासादनं युगपत् । असम्भवे त्वावृत्तिः । न व्याहृतिभिर्वाजिनम् । विकृतौ धर्म उच्यमानः प्रधानार्थो भवतीति । न च प्राकृतो मन्त्रः । अप्रयोजकत्वात्[ख] । न चोत्करे वेदिधर्माः, एतस्मादेव[ग] । सूत्रकारमतिश्च 'अष्टौ हवींषि निर्वपती 'त्यष्टावेव हविर्ग्रहणेन गृह्यन्त इति । केचित् 'प्रियेणे' त्यासादयन्ति । कुर्वन्ति च[घ] वेदिधर्मानुत्करे सान्नाय्यविकारत्वात् । [1]उपदेशस्तु[ङ] व्याहृतिभिर्वाजिनासादनम् उत्करे वेदिधर्मा इति ॥ १०, ११ ॥

**पञ्च होत्रा यजमानः सर्वाणि हवींष्यासन्नान्यभिमृशति ॥१२॥**

सर्वाभिमर्शनप्रत्याम्नायः[च] पञ्च होता । साधारणवैशेषिकाभिमर्शनं कृत्वा अधिकं पञ्च होतेत्युपदेशः[छ] । आग्नेयवच्च सावित्रस्य । दधि [2]प्रातर्दोहविकाराभ्यां[ज] मन्त्राभ्यामामिक्षाभिमर्शनम् ॥ १२ ॥

---

1 B.MS. 2 omits from उपदेशस्तु to वेदिधर्मा इति ।

2 B.MS. reads दध्नः प्रतिर्दोहविकारत्वात् द्वाभ्यां मन्त्राभ्याम् ।

क. 'देवस्त्वा सविता मध्वाऽनक्तु' इत्यलङ्करणमन्त्रः । एककपालेऽभिपूरणस्यैवाऽलङ्करणरूपत्वात् तत्र तन्मन्त्र इति । एककपालपुरोडाशाधारभूतस्य पात्रस्य पूरणमाज्येन कर्तव्यम् । आविःपृष्ठं यथा पुरोडाशस्योपरिभागो दृश्येत तथा ।

ख. वाजिनस्याप्रधानत्वेन धर्माप्रयोजकत्वादिति ।

ग. अप्रधानत्वेनाप्रयोजकत्वादिति ।

घ. केचित्तु दधिपयोरूपसान्नाय्यप्रभवत्वाद्वाजिनस्य सान्नाय्यधर्मत्वं, तदर्थे चोत्करे वेदिस्थानापन्ने वेदिधर्मप्राप्तिं चेच्छन्तस्तत्र तान् कुर्वन्ति इति । अत्रासम्मतिः केचिदित्यनेन प्रदर्शिता भाष्यकारेण ।

ङ. वाजिनस्यापि हविष्ट्वमस्त्येव । अतो व्याहृतिभिरासादनं वेद्यां प्राप्तम् । वेदिस्थाने उत्करो विधीयते । न तु उत्करे वेदिधर्माः कर्तव्याः । वेदिशब्दस्योद्धननादिसंस्कारवाचित्वेन यत्रोद्धननादिकं तत्र वेदित्वापत्त्या उत्करत्वभङ्गापत्तेः उत्करे वाजिनमिति विधिबाधापत्तेरित्युपदेशमतमिति ।

च. सम्भवत्प्राप्तिकस्यापि पुनर्विधानादितरेषामभिमर्शनमन्त्राणां निवृत्तिरिति ।

छ. अदृष्टानां सम्भवति समुच्चये बाधस्यायुक्तत्वादित्युपदेशाशय इति ।

ज. विकाराभ्यां विकारविशिष्टाभ्याम् । इदमिन्द्रियममृतं यत् पृथिवीम्, इति मन्त्राभ्यां शृतदधिपदस्थाने ऊहितामिक्षापदविशिष्टाभ्यामामिक्षाया अभिमर्शनमिति । See आप. श्रौ. ४-८-३ for these two.

**पशुवन्निर्मन्थ्यः सामिधेन्यश्च ॥ १३ ॥**

लौकिकमधिमन्थनशकलं स्रुवेणाभिहोमान्तं कृत्वा वेदविधानम्। सप्तदश सामिधेन्यः। [1]'त्वं वरुण'इति सर्वेषां [क]परिधानीया। 'दुरो अग्न आज्यस्य वियन्तु, उषासा नक्ता अग्न[2] आज्यस्य वीताम्। दैव्या होतारा अग्न आज्यस्य वीतां, तिस्रो देवीरग्न आज्यस्य वियन्त्वि'ति ॥ १३ ॥

**नव याज्याः। चतुर्थोत्तमावन्तरेण पाशुकाश्चत्वारो दुरःप्रभृतयः प्रैषप्रतीकयाज्याः ॥ १४ ॥**

प्रतीकं मुखम्। प्रैषमुखा याज्याः ॥ १४ ॥

**पशुवत्समानयनम् ॥ १५ ॥**

पशुवत्समानयनं [ख]चतुर्थाष्टमयोः। पशुवच्चानुमन्त्रणं स्यात्। अयं सूत्रकाराभिप्रायः। [3]उपदेशश्च। न्यायस्तु चतुर्णामागन्तुकत्वात् द्वौ बर्हिर्विकारौ द्वावुत्तमस्य। अतश्चतुर्थसप्तमयोस्समानयनमनुमन्त्रणञ्च। यो यस्य विकारस्तदर्थः। पशौ चतुर्थोत्तमविकारादौ समानयनमेवमिहापि ॥ १५ ॥

**प्रचरणकाल उपांशु सावित्रेण प्रचर्य पूर्ववदेककपालेन प्रचरति ॥**

[ग]सोमस्याहं देवयज्यया वृत्रहा भूयासम्। सवितुरहं देवयज्ययाऽन्नादो भूयासम्।

---

1 त्वं वरुण उत मित्रो अग्ने। त्वां वर्धन्ति मतिभिर्वसिष्ठाः। त्वे सुषणनानि सन्तु यूयं पातस्वस्तिभिस्सदानः॥ (तै. ब्रा. ३. ५. २. ३.)

2 'क' omits अग्न।

3 Ad. MS. omits उपदेशश्च।

क. परिधानीया अन्तिमा ऋक्। दर्शपूर्णमासयोस्सामिधेनीषु तस्या एवान्ते पाठात् पशौ तथैवातिदेशात् पशुवत्सामिधेन्य इत्युक्तत्वादिति।

ख. त्रीन् प्रयाजानिष्ट्वा चतुर्थारम्भे औपभृतस्याऽऽज्यस्यैकदेशं जुह्वांसमानीय चतुर्थादीन् सप्तमान्तान् प्रयाजान् कुर्यात्। ततोऽष्टमप्रयाजारम्भे सर्वमौपभृतमाज्यं जुह्वामानीयाष्टमनवमौ प्रयाजौ कुर्यात्। तत्र 'वसन्तमृतूनां प्रीणामी' त्यादि प्रथमप्रयाजानुमन्त्रणम्। 'ग्रीष्म' मित्यादि द्वित्यादि द्वितीयस्य। 'वर्षा' इत्यादि तृतीयस्य। चतुर्थप्रभृतिषु सप्तमान्तेषु शरदमृतूनां प्रीणामीत्यनुमन्त्रणम्। अष्टमनवमयोः हेमन्तशिशिरावृतूनां प्रीणामि' इत्युनुमन्त्रणमिति।

ग. अग्नीषोमान्तर्गतसोमरूपप्राकृतदेवताकत्वादग्नीषोमविकारत्वमङ्गीकृत्य तदीयमनुमन्त्रणं वृत्रहा भूयासमिति। सावित्र आग्नेयविकारः।

मरुतामहं[क] देवयज्ययेन्द्रियाव्यन्नादो[1] भूयासम् । [ख]पञ्चानां प्रत्यक्षाम्नातानि । यद्यप्येक-कपालानां वैश्वदेविकः प्रकृतिः । आग्रयणे कर्मणि तद्बद्धमिति [ग]"पूर्ववदेककपालेनेत्युच्यते[2]"। उद्धृत्य बर्हिषदं कृत्वेत्येवमाद्या प्रचरणात् । सवित्रे सवितारं, सवितुः, सवितेदं हविः । सरस्वत्यै, सरस्वतीं, सरस्वत्याः, सरस्वतीदं हविः। पूष्णे, पूषणं, पूष्णः, पूषेदम् । मरुद्भ्यः, मरुतः, मरुतां, मरुत इदं हविरजुषन्त । विश्वेभ्यो देवेभ्यः, विश्वान् देवान्, विश्वेषां देवानां, विश्वे देवा इदं हविः । द्यावापृथिवीभ्यां, द्यावापृथिवी, द्यावापृथिव्योरहं, द्यावापृथिवी इदं हविः । [3]अजुषत, अजुषन्त, अजुषेताम् । अवीवृधत, अवीवृधन्त, अवी-वृधेताम् । अक्रत, अक्रत, अक्राताम् ॥ १६ ॥

**मधुश्च माधवश्चेति चतुर्भिर्मासनामभिरेककपालमभिजुहोति ॥**

उपर्येककपालस्य होमाः मासनामभिः । ततो नारिष्ठादि ॥ १७ ॥

**दक्षिणाकाले प्रथमजं वत्सं ददाति मिथुनौ वा गावौ ॥ १८ ॥**

तस्मिन् संवत्सरे यो जातः पूर्वं [4]वत्सेभ्यः स दीयते सह मात्रा । इतरथा हि म्रियेत वत्स इति । न च दानोपकारः स्यात् । वत्सस्य तु प्रतिग्रहणं सवत्सधेनुचोदनासु ।

1 घ and ङ. read इन्द्रियावी भूयासम् ।

2 घ reads एकपालेन प्रचरतीत्युच्यते, B.MS. 2 omits इत्युच्यते ।

3 B.MSS. read अजुषत, अजुषेताम्, अजुषन्त । अवीवृधत, अवीवृधेताम्, अवीवृधन्त । अक्रत, अक्राताम्, अक्रत । Ad. MS. adds before अजुषत and after द्यावापृथिवी इदं हविः अजुषेतामवीवृधेतां मह्योऽज्यायो क्राताम् ।

4 B. MS. reads वत्सान्तरेभ्यः ।

क. मारुतस्य बहुदेवताकत्वसादृश्यादक्षरसादृश्या( त्र्यक्षरत्व )च्चैन्द्राग्नविकारत्वमङ्गीकृत्य तदीयमनु-मन्त्रणमिदम्—इन्द्रियाव्यन्नाद इति ।

ख. पूर्वोक्तत्रयातिरिक्तानां आग्नेय, सारस्वत, पौष्ण, वैश्वदेव, द्यावापृथिव्यरूपाणां पञ्चानां यागानामनु-मन्त्रणमन्त्रपाठमध्ये सूत्रकारेण कण्ठत एव ( See आप. श्रौ. ४-१०-१ ) मन्त्राणां पाठात् तेषां तथैवाऽत्र ग्रहणमिति । तदित्थम्–अग्नेरहं देवयज्ययान्नादो भूयासम् इत्याग्नेयस्य । सरस्वत्या अहं देवयज्यया वाचमन्नाद्यं पुषेयम्, इति सारस्वतस्य । पूष्णोऽहं देवयज्यया प्रजनिषीय प्रजया पशुभिः, इति पूष्णः । विश्वेषां देवानामहं देवयज्यया प्राणैस्सायुज्यं गमेयम्, इति वैश्वदेव्या आमिक्षायाः । द्यावापृथिव्योरहं देवयज्ययोभयोर्लोकयोर्ऋध्यासम्, इति द्यावापृथिव्यस्य ।

ग. पूर्ववत् आग्रयणैककपालवदित्यर्थः । यद्यप्ययमेव वैश्वदेवपर्वान्तर्गत एककपालानामितरेषां प्रकृतिभूतः ब्राह्मणेऽत्रैव तदङ्गानामाम्नानात् । तथापि सूत्रकारेणाऽऽग्रयणैककपाल एव धर्माणां पाठात् तेषामत्र प्राप्त्यर्थं पूर्ववदित्युक्तमत्र सूत्रकारेणेति ।

अन्वाहार्यधर्मो दक्षिणानां दर्शपूर्णमासविकाराणाम्। [क]न तूपदेशः। मिथुनं स्त्रीपुमांश्च॥

**पृषदाज्यं जुह्वामानीय पृषदाज्यधानीमुपभृतं कृत्वा तेन नवानू याजान्यजति॥ १९॥**

इति द्वितीया कण्डिका॥

**अष्टावाद्याः पाशुकाः प्रैषवर्जम्॥ १॥**

पाशुकाः पठिताः याज्याः। 'देवं बर्हिर्वसुवने वसुधेयस्य वेत्वि'ति विना प्रैषैः प्रथमविकाराश्चत्वारः। नराशंसस्य विकाराश्चत्वारः। एक उत्तमविकारः पशुवच्च सर्वम्॥ १॥

**उत्तमेनोत्तमम्॥ २॥**

उत्तमेन प्रकृतिपठितेन देवो अग्निः स्विष्टकृदुत्तमः। तेन यजति॥ २॥

**देवान्यजेति प्रथमं सं प्रेष्यति। यज यजेतीतरान्॥ ३॥**

देवान् यजेति प्रथमानूयाजप्रैषः। यज यजेति मध्यमोत्तमविकारेषु। तेषां [ख]द्वियजत्वात्। उपदेशः यज यजेति प्रथमविकारेष्वप्युच्यते। इतरानित्यविशेषवचनात्॥ ३॥

**संवत्सरीणां स्वस्तिमाशास्ते। दिव्यं धामाशास्त इति सूक्तवाकस्याशिःषु होतानुवर्तयते॥ ४॥**

'दिव्यं धामाशास्त' इत्यस्य पुरस्तात् 'संवत्सरीणां स्वस्तिमाशास्त' इति क्षेपः॥ ४॥

**एवं यजमानो जपति। आशास इति मन्त्रं संनमति॥ ५॥**

'सा मे सत्याशी'रित्युक्त्वा संवत्सरीणां स्वस्तिमाशास इति जपो [1]यजमानस्य। ततो रोहितेनत्वेति॥ ५॥

---

1 B.MS. reads याजमानजपः।

क. प्रतिग्रहमन्त्रेषु वत्सादि दक्षिणानां पृथक् पृथक् मन्त्रपाठात् तद्दाने प्रकारभेदाच्च नाऽन्वाहार्यकार्यापन्नत्वं तेषामिति न तत्रान्वाहार्यधर्माणां प्राप्तिरित्युपदेशमतमिति।

ख. प्रैषे यज यज, इति वारद्वयं यजशब्दः प्रयोक्तव्यः। तदेव द्वियजत्वम्। एवं च प्रथमानुयाजविकाराणां प्रैषः 'यज' इत्येक यज एव। द्वितीयतृतीयविकाराणान्तु द्वियज इति भाष्यकारमतम्। उपदेशमतं तु प्रथमानुयाज एव 'देवान् यज' इति सम्प्रैषः। उत्तरत्र सर्वेष्वपि 'यज यज' इत्येव, इतरान् इत्यविशेषवचनादिति। तत्राद्याश्चत्वारः प्रथमविकाराः। पंचमाद्याश्चत्वारो मध्यमविकाराः। नवमस्तृतीयविकार इति वेदितव्यम्।

**परिधीन्प्रहृत्य संस्रावान्तं कृत्वा वाजिनपात्र उपस्तीर्यान्तर्वेदि बर्हिरनुविषिञ्चन्वाजिनं गृह्णाति ॥ ६ ॥**

यदि संस्रावान्तं कृत्वेत्येतावदुच्येत 'प्रहृत्य परिधीन् जुहोती'ति श्रुतेर्विकल्पस्स्यात्। अतस्संस्रावस्य परिधिप्रहरणाङ्गत्वं ख्याप्यते। अतो [क]हारियोजनोऽपि संस्रावान्त एव गृह्यते। यथा बर्हिषि[ख] विषिच्यते तथा वाजिनं गृह्णाति। अन्तर्वेदिस्थे वाजिनपात्रे [ग]स्थाल्यैव क्षिपति ॥ ६ ॥

**नाभिघारयति ॥ ७ ॥**

नाभिघारयति। द्विः गृहीतमेव[घ]।

**वाजिभ्योऽनुब्रूहि वाजिनो यजेति संप्रैषौ वषट्कृते चमसेन जुहोति। स्रुचा वानुविषिच्यमानयानुवषट्कृते च ॥ ८ ॥**

आश्राव्य प्रत्याश्राविते "वाजिनो यजे"ति चमसेन जुहोति यदि चमसो वाजिनपात्रम्। अनुविषिच्यमानयाऽन्यत्रावस्कन्दमानया जुहोतीति। अनुवषट्कारे च होमः[1]। शेषस्य स्थापनं [ङ]द्वियागभक्षणार्थम् ॥ ८ ॥

**ऊर्ध्वज्ञुरासीनोऽनवानं होता यजति ॥ ९ ॥**

याज्यायामूर्ध्वज्ञुः। केचित्पुरोनुवाक्यायामपि। अनवानं अनुच्छ्वसन्। [2]अर्धर्चे सन्दधाति। केचिद्धिरभ्याऽर्धर्चेनोच्छ्वसतीत्याहुः ॥ ९ ॥

---

1 क reads होमशेषस्य स्थापनम्।

2 क reads अर्द्धर्चे।

क. हारियोजनो नाम ग्रहविशेषस्सोमयागे विहितः 'परिधिप्रहृतेपूत्रेता हारियोजनं गृह्णाति' (आ. श्रौ. १३. १७. १). इति। तत्रापि परिधिप्रहरणे कृते संस्रावहोमं कृत्वाऽनन्तरमेव हारियोजनग्रहग्रहणमिति।

ख. वाजिनग्रहणं नाम वाजिनपात्रस्य वाजिनेन प्रपूरणम्। पूरणकाले पात्रस्याधोऽवस्थितदर्भाणामुपरि यथावाजिनं पतेत्तथा पूरयेदित्यर्थः।

ग. द्रवद्रव्यान्तरवत् न स्रुवेण ग्रहणम्। किन्तु वाजिनस्थाल्यैव पात्रे प्रक्षेपः कार्य इति।

घ. उपस्तरणं ग्रहणं चेति द्विर्गृहीतमेवेति।

ङ. 'उद्रेकेण पशुबन्धवद्द्विराः प्रतीज्य' (आप० श्रौ. ८. ३. १२) इति द्वियागान्विधास्यति। तदर्थं... 'समुपहूय भक्षयन्ति' (आप० श्रौ. ८. ३. १२.) इति विहितभक्षणार्थं चेति ॥

**वाजिनस्याग्ने वीहीत्यनुयजति ॥ १० ॥**

वाजिनस्याग्ने वीहीत्यनुवषट्कारस्य याज्या ॥ १० ॥

**त्रयाणां ह वै हविषां स्विष्टकृतेन समवद्यन्ति सोमस्य वाजिनस्य घर्मस्येति ॥ ११ ॥**

त्रयाणां हविषां [क]स्विष्टकृतेऽग्नये होमार्थे न समवद्यन्ति । न गृह्णन्ति सोमादीः पृथक् । देवतयैव सह गृह्णन्ति । अथवा स्विष्टं करोतीति स्विष्टकृदग्निः छान्दसोऽकारान्तस्समासः । तेनाग्निना स्विष्टकृतेन समवद्यन्ति सह [1]गृह्णन्ति । सोमादीनां हविषां [2]देवतया सह । अन्यत्र [3]तु पृथगनुवषट्कारः । स्विष्टकृद्धोमादीनाम् । 'वाजिनामहं [4]देवयज्ययेन्द्रियावी भूयासम्' इतीन्द्रयाजिनः । 'जेमानं महिमानं गमेयमि'ति महेन्द्रयाजिनः । 'अग्नेरहं देवयज्ययाऽऽयुष्मान् यज्ञेन प्रतिष्ठां गमेयमि'ति अनुवषट्कारस्य । [ख]नोभयस्योपदेशेन ॥ ११ ॥

**उद्रेकेण पशुबन्धवद्दिशः प्रतीज्यान्तर्वेदि शेषं सर्वे समुपहूय भक्षयन्ति ॥ १२ ॥**

उद्रेकः शेषः । तेनेज्या दिगुपस्थानान्तम् । प्रतिनिवृत्य स्थापयित्वान्तर्वेदि समुपहवः । पश्चादन्यत्र भक्षणम् ॥ १२ ॥

**असावसावुपह्वयस्वेति कर्मनामधेयेनामन्त्रयते ॥ १३ ॥**
**उपहूत इति प्रतिवचनः ॥ १४ ॥**

होताऽध्वर्य उपह्वयस्व, ब्रह्मन्नुपह्वयस्व, अग्नीदुपह्वयस्व यजमानोपह्वयस्वेति । अध्वर्युर्होतरुपह्वयस्वेत्येवमादि ब्रह्माग्नीध्रयजमानश्च ॥ १३, १४ ॥

---

1 B.MS. 2 omits सह गृह्णन्ति ।
2 क reads सहदेवतया ।
3 घ omits तु ।
4 ख reads first महेन्द्रयाजिनः and then इन्द्रयाजिनः ।

क. सूत्रे 'स्विष्टकृते न समवद्यति' इत्यत्र द्विधा पदच्छेदः । स्विष्टकृते इति सप्तम्यन्ततया स्विष्टकृतेन इति तृतीयान्ततया च । तत्र प्रथमं सप्तम्यन्तपक्षमाश्रित्य व्याख्या । अस्यार्थः—अनुवषट्कारयागस्य स्विष्टकृत्स्थानीयत्वेऽपि सोमादीनां त्रयाणां द्रव्याणां अनुवषट्कारयागार्थं न प्रधानार्थग्रहणात् पृथग् ग्रहणं कर्तव्यम् । किन्तु प्रधानयागार्थं गृहीतादेव किंचिदवशिष्यानुवषट्कारहोमः कर्तव्य इति । अथवा इत्यनेन द्वितीया व्याख्या । तत्र स्विष्टकृतेन इत्यकारान्तं तृतीयानिर्दिष्टम् । सोमवाजिनघर्माणां हविषां स्विष्टकृद्देवतया सहैव गृह्णन्ति इति ।

ख. वाजिनयागस्यापूर्वत्वेन सामान्यविकारभावाभावेन न हुतानुमन्त्रणमित्युपदेशमतमिति ।

**होता प्रथमो भक्षयति यजमान उत्तमः। यजमानः प्रथमश्चोत्तमश्चेत्येके ॥ १५ ॥ वाजिनां भक्षो अवतु वाजो अस्माँ रेतः सिक्तममृतं बलाय। स न इन्द्रियं द्रविणं दधातु मा रिषाम वाजिनं भक्षयन्तः। तस्य ते वाजिभिर्भक्षं कृतस्य वाजिभिः सुतस्य वाजिपीतस्य वाजिनस्योपहूतस्योपहूतो भक्षयामीति भक्षयति ॥ १६ ॥**

तथैव द्विर्भक्षयति यजमानः। वाजिनं[क] भक्षयित्वा हविश्शेषभक्षणम् ॥१५, १६॥

**पशुवत्समिष्टयजूंषि ॥ १७ ॥**

समिष्टयजूंषि त्रीणि। दधिक्रावृण्ण इदं हविरित्यादि ॥ १७ ॥

**सिद्धमिष्टिः संतिष्ठते ॥ १८ ॥**

इति तृतीया कण्डिका

यजमानभागस्य मन्त्रद्वयेन प्राशनम्। दर्शवदन्यत् ब्राह्मणभोजनान्तम्। [1]न विकृतौ यज्ञशश्रमः पशुवर्जम्। भवतीत्युपदेशः ॥ १८ ॥

**श्वोभूते पौर्णमास्येष्ट्वा प्रसूता देवेन सवित्रा दैव्या आप उन्दन्तु ते तनुं दीर्घायुत्वाय वर्चस इत्युपोद्य त्र्येण्या शलल्येक्षुकाण्डेनेक्षुशलाकया वा लौहेन च क्षुरेणौदुम्बरेण नि केशान्वर्तयते वापयते श्मश्रूणि ॥ १ ॥ ऋतमेव परमेष्ठ्यृतं नात्येति किञ्चन। ऋते समुद्र आहित ऋते भूमिरियं श्रिता। अग्निस्तिग्मेन शोचिषा तप आक्रान्तमुष्णिहा। शिरस्तपस्याहितं वैश्वानरस्य तेजसा। ऋतेनास्य निवर्तये सत्येन परिवर्तये। तपसास्यानुवर्तये शिवेनास्योपवर्तये शग्मेनास्याभिवर्तय इति निवर्तयति ॥ २ ॥**

समाप्तेऽग्न्यन्वाधानं दर्शपूर्णमासस्य तस्य ब्राह्मणभोजनान्ते प्रसूता देवेनेति क्लेदयत्युदकेन यजमानस्य केशान्। त्रीणि श्वेतानि यस्यास्सेयं त्रेणी। शलली श्वाविट्च्छलाका।

---

1 B.MS. omits न.

क. प्रकृतौ संस्रवहोमानन्तरं 'अत्रैवर्त्विजो हविश्शेषान्भक्षयन्ति' (आप. श्रौ. ३. ७. १५) इति भक्षणस्य विधानेऽपि, अत्र संस्रवानन्तरं वाजिनयागविधानात् तदीयहविर्भक्षणानन्तरमेव प्रधान यागीयहविश्शेषभक्षणमिति।

इक्षुकाण्डेन [1]तस्य पुष्पशलाकया वा। लोहस्य विकारो लौहः। उदुम्बरं ताम्रम्। तद्विकारः औदुम्बरः। [क]लौहेनौदुम्बरमिश्रेण निवर्तयते केशान्। [2]न निर्मूलान्छेदयतेऽध्वर्युणा[3] वापयते तु समूलं श्मश्रूणि। वैश्वदेवे छेदनमेव केशानां नियतम्। पर्वस्वन्येषु वापनमपि [ख]श्मश्रूणां कृत्वा तत उपपक्षौ। प्रसूता देवेनेति केशानामुन्दनम्। शलली मिक्षुकाण्डं हस्ते गृहीत्वा कार्ष्णायसेन ताम्रमिश्रेण क्षुरेण 'ऋतमेव परमेष्ठी'ति छिनत्ति केशान् न निर्मूलान् करोति। केचिदाहुः—'लोहितायसेन निवर्तयत' इति श्रुतेः तेन लौहेन औदुम्बरेणेति तस्यैव विशेषणमिति। यदि समर्थस्ताम्रमयः छेदने ततोऽयमर्थः॥ १, २॥

**तदृतं तत्सत्यं तद्व्रतं तच्छकेयं तेन शकेयं तेन राध्यासमिति यजमानो जपति। ब्राह्मण एकहोतेति चानुवाकम्॥ ३॥**

'तदृतं तत्' "[ग]ब्राह्मण एकहोतेति" च निवर्त्यमानेषु यजमानस्य जपः॥ ३॥

**तस्य पर्वस्वन्तरालव्रतानि। न मांसमश्नाति न स्त्रियमुपैति॥४॥**

[4]स्वार्थस्य मांसभक्षणस्य प्रतिषेधः। इडाभक्षणन्तु [5]नित्ये पशौ भक्षयति; क्रत्वर्थत्वात्। [घ]उपदेशः तस्यापि प्रतिषेधः॥ ४॥

---

1 Ad. MS. reads इक्षुशलाकया वा.
2 B. MS. 1. न मूलं छेदयते.
3 अध्वर्युणा वापयते इति ख. घ.
4 क reads स्वार्थमांस।
5 घ reads नित्यपशौ।

क. लौहेन चौदुम्बरेणेति सूत्रात् न क्षुरद्वयमिति भ्रमितव्यम्। किन्त्वेकेनैव ताम्रमिश्रकार्ष्णायसनिर्मितेन क्षुरेणेति। निवर्तयते छिनत्ति।

ख. स श्मश्रूण्यग्रेऽवपन्त। अथोपपक्षौ। अथ केशान् (तै. ब्रा. १.५.६.३) इति श्रुतौ क्रमाभिधानादिति

ग. ब्राह्मण एकहोता। स यज्ञः। स मे ददातु प्रजां पशून्पुष्टिं यशः। यज्ञश्च मे भूयात्। अग्निर्द्विहोता। स भर्ता। स मे ददातु प्रजां पशून्पुष्टिं यशः। भर्ता च मे भूयात्। पृथिवी त्रिहोता। स प्रतिष्ठा। स मे ददातु प्रजां पशून्पुष्टिं यशः। प्रतिष्ठा च मे भूयात्। अन्तरिक्षं चतुर्होता। स विष्ठाः। स मे ददातु प्रजां पशून्पुष्टिं यशः। विष्ठाश्च मे भूयात्। वायुः पञ्चहोता। स प्राणः। स मे ददातु प्रजां पशून्पुष्टिं यशः। प्राणश्च मे भूयात्। चन्द्रमाः षड्ढोता। स ऋतून्कल्पयति। स मे ददातु प्रजां पशून्पुष्टिं यशः। ऋतवश्च मे कल्पन्ताम्। अन्नँ सप्तहोता। स प्राणस्य प्राणः। स मे ददातु प्रजां पशून्पुष्टिं यशः। प्राणस्य च मे प्राणो भूयात्। द्यौरष्टहोता। सोऽनाधृष्यः। स मे ददातु प्रजां पशून्पुष्टिं यशः। अनाधृष्यश्च भूयासम्। आदित्यो नवहोता। स तेजस्वी। स मे ददातु प्रजां पशून्पुष्टिं यशः। तेजस्वी च भूयासम्। प्रजापतिर्दशहोता। स इदँ सर्वम्। स मे ददातु प्रजां पशून्पुष्टिं यशः। सर्वं च मे भूयात्।

घ. 'न मांसमश्नाति' इत्यविशेषेण निषेधात् क्रत्वर्थस्य पुरुषार्थस्य च सर्वस्याऽपि मांसभक्षणस्य प्रतिषेध इत्युपदेशमतमिति।

**ऋत्वे वा जायाम् ॥ ५ ॥**

ऋतावेव जायामुपेयादिति नियमात् सर्वत्र गमनं वर्णान्तरस्त्रीगमनं च प्रतिषिद्ध्यते ॥ ५ ॥

**नोपर्यासीत ॥ ६ ॥**

उपरिशयनस्यापि प्रतिषेधः, न ह्यनुपविष्टेन शक्यते शयनं कर्तुम् ॥ ६ ॥

**जुगुप्सेतानृतात् ॥ ७ ॥**

[1]जुगुप्सा[क] अनृतवर्जनं क्रत्वर्थः पुनर्विधिः ॥ ७ ॥

**प्राङ् शेते ॥ ८ ॥**

प्राक्शिरा भूमौ न स्थण्डिले शेते ॥ ८ ॥

**अमध्वश्नाति ॥ ९ ॥**

अमधु मधुवर्जमश्नाति। [ख]मधुमांसलवणस्त्र्यवलेखनानि वर्जयेदित्याश्वलायनः ॥ ९ ॥

**मध्वशनं स्यादित्येकम्। व्यञ्जनार्थमित्यपरम् ॥ १० ॥**

मधु अशनमस्य मध्वशनः। मध्वशनो वा भवेद्यजमानः। एतदेकं विधानम्। अपरं तु मधुप्राश्यान्यदश्नाति सामर्थ्यात्। भक्षयितव्यमोदनापूपादि। व्यञ्जननिवृत्तिः। तृतीयो विधिः। मधुनैवाश्नाति। अन्ये त्वाहुः—मध्वश्नातीति श्रुतिः। तस्या मध्वशनस्स्यादिति द्वावर्थौ ॥ १० ॥

**ऋतुयाजी वा अन्यश्चातुर्मास्ययाज्यन्यः ॥ ११ ॥ यो वसन्तोऽभूत्प्रावृडभूच्छरदभूदिति यजते स ऋतुयाजी। अथ यश्चतुर्षु चतुर्षु मासेषु स चातुर्मास्ययाजी ॥ १२ ॥ वसन्ते वैश्वदेवेन यजते प्रावृषि वरुणप्रघासैः शरदि साकमेधैरिति विज्ञायते ॥ १३ ॥**

---

1 घ and ङ read जुगुप्सानृतस्य।

क. न मांसमश्नीयात्, न स्त्रियमुपेयात् नोपर्यासीत, जुगुप्सेतानृतात् (तै. आ. २. ८.) इति श्रुतेरनुवादरूपाणीमानि सूत्राणि।

ख. अमध्वश्नातीत्यकारप्रश्लेषेण व्याख्यानोपोद्बलनायाऽऽश्वलायनमतोपन्यासः। केशप्रसाधनादीनि स्वैरकर्माणि अवलेखनशब्देनोच्यन्ते। इति गार्ग्यनारायणः। अवलेखनं नाम दन्तधावनम्, वासः प्रक्षालनम्, केशः प्रसाधनम्, गात्रोन्मर्दनम्, इति सिद्धान्तभाष्ये See आश्व. श्रौ. वृत्ति. २. १६. २२, २३ and footnote. मध्वमश्नाति इत्येव रुद्रदत्तः पठति। See P. १६ Vol. II.

ऋतौ प्राप्ते यजतीत्यृतुयाजी स एकः। एकश्चातुर्मास्ययाजी। तत्र श्रुति व्याचष्टे यो वसन्तो जातः प्रावृड् जाता शरज्जातेति यजते न फाल्गुनीं चैत्रीं वाऽपेक्षते अन्ते वसन्तस्य कृत्वा वैश्वदेवं प्रावृडादौ वरुणप्रघासैः न पौर्णमासीचतुष्टये। पर्वनियम यदीष्ट्या यदि पशुनेति सर्वत्र स ऋतुयाजी। [क]यस्य मासचतुष्टये नियमः स चातुर्मास्ययाजी समानो विधिरुभयोः। [ख]पुनर्वसन्तादिनियमाच्चातुर्मास्ययाज्यप्रतिपन्ने वसन्ते फाल्गुन्यां चैत्र्यां वा न करोति वैश्वदेवम् ॥ १३ ॥

इति धूर्तस्वामिविरचिते आपस्तम्बश्रौतसूत्रभाष्ये अष्टमप्रश्ने प्रथमः पटलः ॥

---

क. वैश्वदेवानुष्ठानपर्वप्रभृति पञ्चम्यां पौर्णमास्यां यस्य वरुणप्रघासः। ततः पञ्चम्यां साकमेध इत्यादि नियमः स चातुर्मास्ययाजीति।

ख. पङ्क्तिरियमेवं विवृता रामाग्निचिता—सौरचान्द्रमसभेदेन द्विधा वसन्ताद्यृतवो भवन्ति। तत्र द्वादश प्रथमराश्योः ( मीनमेषराश्योः ) सूर्योदयकालः सौरवसन्तो भवति। तत ऊर्ध्वं द्वौ द्वौ मासावृत्वन्तराणि। चान्द्रमसो वसन्तस्तु द्विधा—उत्तराफल्गुनीयुक्तपौर्णमासीयुक्तस्तदुत्तरमासश्च। मासद्वयमेकश्चान्द्रो वसन्तः। हस्तयोगेन वा। अपरस्तु चान्द्रमसः चित्रानक्षत्रेण स्वातीनक्षत्रेण वा युक्त पौर्णमासीयुक्तस्तदुत्तरमासश्चेति मासद्वयं कदाचिद्वसन्तः। तत्र फाल्गुन्यां पौर्णमास्यां चैत्र्यां वेति सूत्रेण वसन्ते वैश्वदेवे प्राप्तेऽपि 'वसन्ते वैश्वदेवेने'ति पुनर्वसन्तग्रहणात् मीनमेषान्तर्भावरहित फाल्गुन्यां चैत्र्यां वा वैश्वदेवो न कर्तव्यः। अप्रतिपन्ने वसन्त इत्यस्यार्थः—फाल्गुनीचैत्र्योरन्यतरस्यास्सौरवसन्तसम्बन्धाभावे तस्यां वैश्वदेवो न कर्तव्य इति। अत्रेदं वक्तव्यम्—शिशिरे दीक्षन्ते वसन्त उपतिष्ठन्ते इति सूत्रे कपर्दिस्वामिना " द्वादशप्रथमराश्योर्यदा सूर्य उदेति तदा वसन्त ' इत्युक्तत्वात् मीनमेषराश्योस्ससूर्योदयकालो वसन्त इति वृत्तिकारोऽभिप्रैति। परन्त्विदानीं लोकव्यवहारस्तु मेषवृषयोर्यदा राश्योरुदेति सूर्यः स वसन्त इति। दक्षिणदेशेऽयमेव पक्षः प्रचलति। पक्षद्वयमपीदं प्रमाणपदवीमारूढमित्येव। यदाह बोधायनः—मीनमेषयोर्मेषवृषयोर्वा वसन्त इति। ( See स्मृतिमुक्ताफल. श्राद्धकाण्ड. P.P. 263 Kumbhakonam Edi. ).

# द्वितीयः पटलः

**ततश्चतुर्षु मासेष्वाषाढ्यां श्रावण्यां वोदवसाय वरुणप्रघासै-र्यजते ॥ १ ॥**

ततः पर्वण आरभ्य । अषाढाभिर्युक्ता आषाढी । श्रवणेन युक्ता श्रावणी । यदा फाल्गुन्यामु[1]पक्रान्तं तदाऽऽषाढ्यां यजेत । यदा चैत्र्यां तदा श्रावण्याम् । मासचतुष्टय-नियमात् यस्मिन्संवत्सरेऽन्तरालेऽधिकमास उत्पद्यते तत्रारम्भो नेष्यते चातुर्मास्यानाम् । उद-वसानं देशान्तरगमनम् ॥ १ ॥

**प्ररूढकक्षे यष्टव्यमिति बह्वृचब्राह्मणं भवति ॥ २ ॥**

कक्षः कच्छः । प्ररूढाः कक्षा यस्मिन्देशे तृणैस्स देशः प्ररूढकक्षः तस्मिन्नुदवसानं कर्तव्यम् । द्वितीयोऽर्थः । चातुर्मास्ययाजिनः पौर्णमासीनियमादृतुयाज्यर्थः कालविधिः । प्ररूढाः कक्षा यस्मिन्काले स कालः [क]प्ररूढकक्षः । तस्मिन्नृतुयाजिना यागः कर्तव्यः ॥ २ ॥

**तस्य वैश्वदेववत्कल्पः ॥ ३ ॥**

वैश्वदेववत्कल्पो विधिः । दक्षिणस्याऽपि विहारस्य सर्वं वैश्वदेववत् । [ख]एत-द्ब्राह्मणान्येव पञ्च हवींषीति श्रुतेः पञ्चसञ्चाराणां मुख्यत्वात्सर्वेषां वैश्वदेवप्रकृतित्वम् । अतः पञ्चसञ्चाराणाम[2]भावाद्दक्षि[ग]णविहारस्य न प्राप्नोति वैश्वदेववद्विधिः । श्रुत्यन्तराद्बुद्धम् ।

---

1 उपक्रान्तः, इति क उपक्रमः इति j. ms.

2 असंभवात् क.

क. वर्षबाहुल्येन यदा तृणसमूहः प्रवृद्धो भवति तस्मिन्वर्षाकाले वरुणप्रघासैर्यष्टव्यमित्युक्तं भवति ॥

ख. आग्नेयसौम्यसावित्रसारस्वतपौष्णरूपाणां पञ्चानां हविषां वैश्वदेवे पर्वणि यो विधिरुक्तः तथैव तदङ्ग-विशिष्टान्येव तान्यत्राप्यनुष्ठेयान्यादावित्यर्थः । एतानि पञ्च हवींषि सर्वेष्वपि पर्वस्वनुष्ठेयतया सञ्चरन्ति प्राप्नुवन्तीति पञ्चसञ्चाराणीत्युच्यन्ते । तानि विधाय वरुणप्रघासेषु तदनन्तरमैन्द्राग्नमेकादशकपालं, मारुतीमामिक्षां वारुणीमामिक्षां कायमेककपालं " इति चत्वारि हवींषि विहितानि । तेषां नवानामपि सह प्रयोगे साधारणाङ्गेषु परस्परविरोधे सति कथमनुष्ठानमिति संशयोदये तन्निराकरणार्थमिदं वचनम् । तेषां प्रथमानुष्ठेयत्वेन मुख्यत्वात् मुख्यं वा पूर्वचोदनाल्लोकवत् ( जै. सू. १२. २. ८. ) इत्यधिकर-णन्यायेन तत्पूर्वतन्त्राधिकरणोपपादितेन भूयोऽनुग्रहन्यायेन वा पञ्चसञ्चरधर्मा एव सर्वेषां हविषां वारुणप्रघासिकानामिति ।

ग. दक्षिणविहारो दक्षिणभागस्था वेदिः । तत्र पञ्च सञ्चाराणि न सन्ति । उत्तरविहार एव तेषामनुष्ठान-विधानात् । अतो दक्षिणविहारेऽपि तत्प्राप्त्यर्थं विधिरयं प्रवृत्त इति ॥

" यदेवाध्वर्युः करोति तत्प्रतिप्रस्थाता करोति " इ[1]त्येतया वरुणप्रघासैर्यक्ष्य इत्युक्त्वा समारोप्याग्नीन्देशान्तरगमनम् । यागदेशं गत्वा मन्थनमुपावरोहणं वा लौकिके । वि[क]द्युदसि ॥ ३ ॥

**वेदी कृत्वा गार्हपत्यं समे प्राची वेदी भवतः ॥ ४ ॥**

यदा शौल्बेन मा[2]नेन निर्मिते वेदी अग्रेण गार्हपत्यं तदा वेदौ कुरुतोऽध्वर्युः प्रतिप्रस्थाता च प्राक्त्वेन समे [ख]प्रकृतितुल्ये न पशुबन्धवद्वेदी । बौधायनस्य पाशुबन्धिकी चोत्तरा दार्शिकी च दक्षिणेति । केचि[ग]त्पशुबन्धवत् । न तु तिर्यक्त्वेन समे । अर्था [घ]यथा सिध्यन्ति तथालक्षणं तिर्यक्त्वम् ॥ ४ ॥

**उत्तरामध्वर्युः करोति दक्षिणां प्रतिप्रस्थाता । उत्तरे विहारेऽध्वर्युश्चरति दक्षिणे प्रतिप्रस्थाता ॥ ५ ॥**

उत्तरां वेदिमध्वर्युः करोतीति । [ङ]अविहृते [3]वेदी इत्यत. पृथगुच्यते ॥ ५ ॥

**उभयत्र कृत्स्नं तन्त्रम् ॥ अपि पत्नीसंयाजाः ॥ ७ ॥**

सर्वाङ्गसमुदाय उभयत्र सयजमानकः । परोऽपि । पत्नीसंयाजाः अप्यन्ये होमाः । [4]पत्नीयदक्षिणाग्निहोमाश्च । [च]एकत्वादग्नेः अध्वर्युरेव कुर्यात् । अत उभयोर्विधीयते । कर्तृपात्रभेदात् ॥ ७ ॥

---

1 इत्यनया इति घ. ङ.

2 Ad ms. reads अग्नि. ङ.

3 विधानेन. ङ.

4 विज्ञाते इति. क.

क. यद्यपि सर्वार्थं वैश्वदेवात्पूर्वमेव कृतं तथापि देशकालभेदेन प्रसङ्गसिध्यनुपपत्तेः प्रयोगाद्यपदार्थस्य देशान्तरप्रयोगे पुनः करणमावश्यकमिति ।

ख. दार्शपौर्णमासिकवेदिसदृशौ । अर्थादुत्तरवेदिरहिताविति ।

ग. उत्तरस्या उत्तरवेदिमत्वमावश्यकम् । तद्वदेव दक्षिणस्यामपीति उभयत्रापि पाशुकी एव वेदी इति ।

घ. उत्तरविहारस्योत्तरवेद्यन्तर्भावात् तद्योग्यं तिर्यक्त्वम् । दक्षिणविहारस्य तु तदभावात् प्रकृतिवत्तिर्यक्त्वमिति ।

ङ. प्रकृतावग्निविहरणात्पूर्वं विहितं वेदिकरणमध्वर्युकर्तृकं दृष्टम् । अत्र तु ततः पूर्वं क्रियमाणं कदाचिदन्यकर्तृकं भवेदिति शङ्कां परिहर्तुं विधिरयमुत्तरामध्वर्युः करोतीति ।

च. गार्हपत्यदक्षिणाग्निहोमाग्न्यसाधारणद्रव्यसंस्कारयवैक एव कुर्यात् । तन्मा भूदित्येवमर्थमुभयोर्विधानमिति । कर्तृभेदात्पात्राणां भेदाच्च पृथगेव करणं न्यायप्राप्तमिति ॥

**एकवत्संप्रैषः ॥ ८ ॥**

एकस्येवैकवद्भवति । एकवचनेन संप्रैषः यद्यपि द्वयोरर्थयोर्याच्यते प्रणेष्यामि प्रोक्षिष्यामीति ॥ ८ ॥

**द्विवद्ब्रह्मानुजानाति ॥ ९ ॥**

द्विवचनेन तं ब्रह्मानुजानाति—प्रणयतम्, यज्ञं देवता वर्धयतमिति । ब्रह्मग्रहणं प्रदर्शनार्थम् । अतो ओं [क]निर्वपतं अनुप्रहरतं [1]'अगतं' इति च भवति । [2]यत्र द्वावनुज्ञातव्यौ । ब्रह्मानुज्ञायामपि[3] यत्रैकोऽनुज्ञातव्यस्तत्र न भवत्यूहः । यथा—ॐ अनुब्रूहीति । द्विवदनुजानातीत्यवचनात् ब्रह्मानुज्ञानेष्वेव द्वित्वेऽभिधेये भवत्यूहः । नान्यत्रेत्युपदेशः[ख] ॥ ९ ॥

**द्व्यङ्गुलं त्र्यङ्गुलं चतुरङ्गुलं पृथमात्रं रथवर्त्ममात्रं सीतामात्रं प्रादेशमात्रेण वा तिर्यगसंभिन्ने वेदी भवतः ॥ १० ॥**

द्व्यङ्गुलादिना परिमाणेन तिर्यगसंभिन्ने असंगते परस्परं प्रति भवतो वेदी । [4]'द्व्यङ्गुलान्तरं भवति श्रोणी प्रति'[5] ॥ १० ॥

**अन्तरा वेदी प्रतिप्रस्थातुः सञ्चरः ॥ ११ ॥**

वेद्योरन्तरेण सञ्चरः कर्मकर्तुः प्रतिप्रस्थातुः । इतरथा नान्तरामी सञ्चरतीति प्रतिषेधः स्यात् ॥ ११ ॥

**अपरेणोत्तरां वेदिं स्तम्बयजुर्हरन्नाध्वर्युमभिपरिहरति ॥ १२ ॥**

बहिर्न भवत्यध्वर्योस्स्तम्बयजुः । अन्तरेव नयति यद्यपि देशभेदः ॥ १२ ॥

**उत्करे निवपति ॥ समान उत्करः ॥ १४ ॥**

---

1 P. Ms. omits. अगतमिति.

2 P. Ms. reads यत्र यत्र.

3 Ad omits अपि.

4 B. Ms. 1 reads यङ्गुलान्तरालम्.

5 B. Ms. 1 reads वेद्यावन्तरेण कर्मकर्तृः संचरः प्रतिप्रस्थातुः ।

क. "यजमान हविर्निर्वप्स्यामि" इत्युध्वर्युप्रतिप्रस्थातृभ्यां प्रार्थितो यजमानः ॐ निर्वपतं इत्यनुजानीयाद् द्विवचनान्तेन । एवं प्रस्तरतृणानुप्रहरणेऽनुप्रहरतमिति । अगानमीदित्यत्र अगानिति स्थाने अगतमिति पठेत्, इति. See आप. श्रौ. ४.४.४, ३.७.४, ३.७.८, respectively for ॐ निर्वप etc.

ख. सूत्रे ब्रह्मग्रहणात्तत्पठनीयमन्त्रेष्वेव द्वितेनोह इति ।

यदा प्रतिप्रस्थात्रा न्युप्तं तदुभयमाग्नीध्रोऽभिगृह्णाति[1] ॥ १४ ॥

**पञ्चर्त्विजः ॥ १५ ॥**

पञ्चर्त्विजो वरुणप्रघासेषु । अतः सामान्यचोदनासु पञ्च भवन्ति समिद्धानादिषु ॥ १५ ॥

**[a]यदेवाध्वर्युः करोति तत्प्रतिप्रस्थाता ॥ १६ ॥**

यदेवाध्वर्युः करोतीति कृतानुकारित्वं प्रतिप्रस्थातुः । [2]तस्माद्यच्छ्रेयान्करोति तत्पापीयान्करोतीति वाक्यशेषात् । अतुल्यकालत्वाद्याजमानावृत्तिः । केचिदाहुः—यद्विधामध्वर्युः करोति तदेव प्रतिप्रस्थात्रा कर्तव्यम् । [3]यमेव कल्पमध्वर्युः करोति । यदि पलाशशाखामध्वर्युराहरति सैवाऽऽनेया प्रतिप्रस्थात्रा । न शमीशाखामाहरति । [क]युगपत्कर्तृकर्मेति तेषामूहोऽर्थद्वित्वे याजमाने ॥ १६ ॥

**यत्किं च वाचाकर्मीणमध्वर्युरेव तत्कुर्यात् ॥ १७ ॥**

वाचा कर्तव्यं कर्म वाचाकर्म । कर्मणि भवं तत्र जातं वा वाचाकर्मीणम् । वाच आकारान्तता छान्दसः स्वः ।[4] [ख]मन्त्रजातमध्वर्युरेव कुर्यात् । [5]कर्मैव केवलममन्त्रकं[ग] प्रतिप्रस्थाता कुर्यादिति[6] ॥ १७ ॥

**युगपत्कालान्वा निगदान् ॥ १८ ॥**

निगद्यन्ते उच्चैरिति निगदाः । [7]ते पुनः प्रैषाः । युगपत्कालो येषां ते युगपत्कालाः तुल्यकाला इत्यर्थः । तुल्यकाला ये प्रैषास्तानध्वर्युरेव कुर्यात् । अन्यैस्तु मन्त्रैः प्रतिप्रस्थात

1 P. Ms. reads गृह्णाति.
2 श्रेयान्करोतीति वाक्यशेषात् इति क.
3 P. Ms. reads यमेवाध्वर्युः ।
4 तं मन्त्र इति घ.
5 कर्मैव केवलमिति नास्ति क.
6 इति नास्ति क. पु.
7 के पुनः ? प्रैषाः इति J. Ms.

a यदेवाध्वर्युः करोति तत्प्रतिप्रस्थाता करोति इति श्रुतेरनुकरणमिदम् ।

क. कर्मद्वित्वे यत्रकालभेदस्तत्र यजमानस्यावृत्तिः । यत्र युगपदेव करणं तत्र द्विवचनान्तेनोह इति ।

ख. वाचा कर्तव्यं कर्म मन्त्रपाठादिकम् ।

ग. एकेनापि कर्मसाधनीभूतमन्त्रोच्चारणे कृते तत्प्रकाशितकर्मानुष्ठानस्योभयोरपि संभवाच्च भेदेनोच्चारणं कर्तव्यमिति ।

करोति । कथं कृतानुकारित्वे युगपत्कालता निगदानामुपपद्यत इति । केचित्पुरुषसंस्कारत्वात्प्रैषाणां तन्त्रभूतस्य चार्थस्य ब्रह्मयजमानादेः प्रैषसंस्कर्तव्यस्य चैकत्वात्तन्त्रेणैवोभाभ्यां संस्कारः प्राप्तः । स [1]तुल्यकालत्वादध्वर्युणैव कर्तव्य इति द्वितीयो विधिः । प्रोक्षिष्यामि, हविर्निर्वप्स्यामि, अग्नीत्परिधीनित्येवमाद्याः[2] [3]ये त्वयुगपत्कालाः ते उभाभ्यामपि कर्तव्याः । [क]उपसृष्टां मे प्रब्रूतादिति प्रतिप्रस्थातुरपि पूर्वम् । देवताक्रमात् । प्रचरणे च मारुत्या अनुब्रूहीत्येवं प्रकारा अयुगपत्कालाः ॥ १८ ॥

**साधारणद्रव्यांश्च संस्कारान् ॥ १९ ॥**

साधारणानि द्रव्याणि । सामान्यानीत्यर्थः । गार्हपत्यदक्षिणाग्निसभ्यावसथ्याः । होत्राग्नीध्रब्रह्मयजमानाश्च । तेषां संस्काराः, अग्नीनां परिस्तरणाद्याः वरणादयश्च पुरुषाणाम्, ते अध्वर्युणैव कर्तव्याः । नोभाभ्याम् । अध्वर्योर्मुख्यत्वात् । एकेन च [4]प्रकृतौ तेषां संस्कारः कृत इति ॥ १९ ॥

**प्रागुत्तरात्परिग्राहात्कृत्वैकस्फ्यया वेदी अनुसंभिनत्ति । दक्षिणस्या उत्तरायै श्रोणेः प्रक्रम्यादक्षिणादंसादुत्तरस्याः ॥ २० ॥**

पृथक् पृथक् [5]स्फ्यादानादि क्रमेणाध्वर्युः प्रतिप्रस्थाता च कुरुतः स्वां स्वां वेदिम् । याजमानावृत्तिः । तन्त्रेणाभिगृह्यमाणस्य उत्करस्य[ख] । पर्यायेणाग्नीध्रः समुद्धृतस्य । [ग]इमां नरा इत्यध्वर्युरेव । खनने च कृते निर्माणे च वेद्योः । एकयत्नेन स्फ्येन या क्रियते

---

1 अतुल्यकालानां इति घ.

2 इत्येवमादि.

3 Ad. ms. reads wrongly ये तु युगपत्.

4 B. Ms. 1.2 read कृतौ.

5 आसदमादि. घ.

क. मारुत्यामिक्षा भवति । वारुण्यामिक्षा (तै. ब्रा. १.६.४.) इति विधाय अनन्तरं मारुत्या पूर्वया प्रचरति । वारुण्योत्तरया । (तै. ब्रा. १.६.५) इति तयोः पौर्वापर्यमनुष्ठाने विहितम् । उत्तरस्यां वेद्यामन्यानि हवींषि भवन्ति । दक्षिणस्यां मारुतीम् (तै. ब्रा. १.६.५) इति मारुत्या दक्षिणविहारानुष्ठेयताविधानात्प्रतिप्रस्थातृकर्तृकत्वं प्राप्तम् । तत्रोपसृष्टां मे प्रब्रूतादिति दोहनार्थं संप्रैषः (आप. श्रौ. १.१२.१०.) मारुतयागीयः पूर्वं प्रतिप्रस्थात्रा प्रयोक्तव्यः । प्रचरणकाले चानुवचनप्रैषादय इति ।

ख. याजमानाभिमन्त्रणं "इदं तस्मै हर्म्यं करोमि" इतिमन्त्रेण क्रियमाणं (See आप. श्रौ. ४.२.३.) तन्त्रेणैव भवतीति ॥

ग. इमां नराः कृणुत वेदिमेत देवेभ्यो जुष्टामादित्या उपस्थे । इमां देवा अजुषन्त विश्वे रायस्पोषा यजमानं विशन्तु ॥

रेखा सैकस्फ्या । तया [1]अनुसंभिनत्ति । दक्षिणस्या वेदेः उत्तरस्यै श्रोणेरारभ्य लिखति यावदुत्तरस्या [2]दक्षिणेंऽस इति ॥ २० ॥

**उत्तरस्यां वेद्यां पशुबन्धवदुत्तरवेदिमुदवपति ॥ २१ ॥**

अध्वर्युस्ततो वेद्यामुत्तर[3] वेदिं करोति । उत्तरस्यामेवान्ते । अन्ततो हि देवानामाधीयत इति वचनात् । [क]शम्यामात्री " वित्तायनी मेऽसी " त्यादि । चात्वालोऽपि क्रियते उत्तरवेदिप्रयुक्तत्वात् ॥ २१ ॥

**काले पशुबन्धवदग्नी प्रणयतः ॥ २२ ॥**

दक्षिणतो निःसारणान्ते कृतेऽग्न्योः प्रणयनं पशुबन्धवत् । उपर्यग्नौ धार्यमाणे [ख]व्याघारणादि,[4] [ग]ऊर्णास्तुकानिधानान्तं वैश्वदेववत् । दक्षिणस्यामपि वेद्यामूर्णास्तुकैव वैश्वदेवप्रकृतित्वात् । विनाप्युत्तरवेद्या उभयत्रातिमुत्तयन्तेऽग्न्यन्वाधानम् । उपदेश उत्तरस्यां संभाराः पूर्ववत् । उपर्यग्नौ धार्यमाणे वा दक्षिणस्यामूर्णास्तुकैवेति । कालवचनान्निर्मितायामुत्तरवेद्यां यः प्रणयनकालः तस्मिन्नुत्तरवेदिकत्वात् [5]दक्षिणस्याऽऽपाशुकमपि प्रणयनं स्यात् । अतः पशुबन्धवद्वचनात् उभयत्र [6]पाशुकम् । पुनश्च पशुबन्धग्रहणादाहवनीयादपि स्यात् । अतो गार्हपत्यग्रहणम् । गतश्रियोऽपि ना[7]ऽऽह्वनीयात्प्रणयनम्, न वा दक्षिणस्यैकस्य । गार्हपत्यादग्नी प्रणयत इति द्विवचनात् । अतो गतश्रियः पृथक् [8]समारोप्योदवसायाग्निं मथित्वा वेदिं कृत्वा उत्तरवेदिं च विभज्याहवनीयं [9]प्रणयनीयौ क्षिपतः । ततोऽग्नये प्रणीयमानायानुब्रूहीत्युक्तेऽध्वर्युणा अतिमुत्तयन्तं उभयोर्नयनम् । अर्थ-

1 भिनत्ति घ. संभिनत्ति. ङ.
2 दक्षिणेंऽस इति घ.
3 ततो वेदिं करोति इति क.
4 व्याघारणप्रभृति इति घ.
5 दक्षिणस्य विहारस्यापाशुकमपि. इति. घ. ङ. पु.
6 अपाशुकम्, इति घ. ङ.
7 P. Ms. reads wrongly आहवनीयादिति.
8 P. Ms. reads उदवसाय मथित्वा.
9 Ad. reads wrongly प्रणयनीयं नाहवनीये क्षिपतः.

क. See आप. श्रौ. ७.३.१३.१४ for शम्यामात्री and वित्तायनी मेऽसि ।

ख. व्याघारणं अक्ष्णया दीर्घधाराकरणं घृतेन. See आप. श्रौ. ७.५.४. to ६.१. for व्याघारणादि also आप. ८.१.७.

ग. ऊर्णास्तुका मेषादि लोमरहस्या आहवनीयायतने विहितम् ( आप. श्रौ. ८.१.७ ).

लुप्तमुत्तरवेद्यां वेद्यां च स्थापयतोऽग्नी[1] इति । उपदेशः कृत्वोत्तरवेदिं विभज्याऽऽहवनीयमुत्तरवेद्यां[2] वेद्यां च तूष्णीं स्थापयतः । ततोऽग्न्यन्वाधानमिति[3] । [क]केचित् आहवनीयात्प्रणयनम् । तत्त्वनुपपन्नम् । गार्हपत्यादेव वचनात् ॥ २२ ॥

**नोद्यतहोमौ जुहुतः ॥ २३ ॥**

पुनरुद्यत[ख]होमप्रतिषेधात्कुण्डपायिनामयनेऽपि न भवत्याहवनीयात्प्रणयनम् । तस्यैवाऽऽहवनीयस्य गार्हपत्यचितौ प्रतिष्ठितस्य दक्षिणस्यां वेद्यां स्थापनमर्थस्य यद्यपि वेदिरग्निश्च चितिर्विद्यते । यदि ह्याहवनीयात्प्रणीयते उद्यतहोमयोरपि भावः स्यात् । अतस्तयोः प्रतिषेधादाहवनीयात्प्रणयनप्रतिषेधोऽनुमीयते । उत्तरवेदिर्यदा गार्हपत्यचितिर्भवति । अतस्तथास्थित एवाऽग्नौ क्रियते । गार्हपत्यचितेर्धारणार्थत्वात् । न च सोमार्थः प्रणीतश्चालयितव्यः सोमाङ्गानि उपसदन्तानि तत्र कृतानीति । यदा कृता दक्षिणा वेदिः तदर्थं स्थाप्यते । तस्यां तूष्णीम् । नह्यर्थं पशुवन्नीयते । येषां त्वतिप्रणीते [4]हविर्यज्ञमासे तेषां महावेद्यां दक्षिणतो दक्षिणवेदिः । तथैवाग्निविभागस्तूष्णीम् । पशुवद्वा दक्षिणाग्नेर्नयनमर्थलुप्तं न भवतीति । उद्यतहोमप्रतिषेधस्यार्थवत्त्वम् । [ग]प्रणयनप्रैषमध्वर्युरेव[5] । न चाग्न्यभिधानानामूहः आहवनीयैकत्वात् । एको ह्याहित आहवनीयो न विभक्त इति । स द्वित्वमापद्यते संसर्गित्वाच्च । ये लोकवेदयोरुभयथा प्रवर्तन्ते ते संसर्गिणः । यथा प्रचुरोऽग्निः प्रचुरा अग्नयः । [घ]यत्त्रेधाग्निराधीयते । "तस्मादेतावन्तोऽग्नय आधीयन्ते" इति । अतो मन्थने

---

1 अग्नि Ad.

2 Only उत्तरवेद्यां Ad. ms.

3 अन्वाधानं इति ध.

4 Ad. Ms. हविर्यज्ञमासे. B. Ms. 1. हविर्यज्ञे मासाः. B. Ms. 2. हविर्यज्ञमांसे. J. Ms. reads हवियज्ञसोमाः ।

5 Ad. Ms. reads प्रणयनप्रैषणे अध्वर्योरेव.

क. कल्पान्तरवचनमनुसृत्य केचिदाहवनीयात्प्रणयनं ब्रुवते । तन्न युक्तम् । गार्हपत्यादमी प्रणयत इति कण्ठत एवोक्तत्वात्सूत्रकारेणेति ।

ख. See आप. श्रौ. ७.६.५. for उद्यतहोम. उत्तरवेद्यर्थमाहवनीयादग्निमुद्धृत्य तदनन्तरं क्रियमाणो होम उद्यतहोमः ॥

ग. "अग्नये प्रणीयमानायानु ब्रूहि" इति प्रैषोऽध्वर्युणैव कर्तव्यः । न प्रतिप्रस्थात्रापि । न चाग्नय इत्यस्य स्थाने "अग्निभ्यां" इत्यूहः कर्तव्यः । आधानसंस्कृतस्याहवनीयस्यैकत्वेनोहाप्रसक्तेरिति ॥

घ. संसर्गित्वे वैदिकमुदाहरणमाधानप्रकरणगतम्—यत् त्रेधेति ।

ऽत्यनूहोऽग्निद्वित्वेऽपि । [1]अत एव सर्वतोमुखे[क] याजमानेष्वग्न्यभिधानानामनूह एव । अनूहे चार्षस्याबाधोऽर्थश्च गम्यत इति ॥ २३ ॥

**अन्तरा वेदी प्रतिप्रस्थाता प्रतिपद्यते । उत्तरेणोत्तरां वेदिमध्वर्युः ॥ २४ ॥**

यदा क्रमेण गृहीतावग्नी तदा [ख]अन्तरा वेदी प्रतिप्रस्थाता पूर्वः प्रतिपद्यते । पश्चादध्वर्युरदूरेणोत्तरत उत्तरस्या वेदेः । न तु वेद्या उपरिष्टाद्धरति ॥ २४ ॥

**पूर्वोऽध्वर्युरुत्तरवेद्यामग्निं प्रतिष्ठापयति । जघन्यः प्रतिप्रस्थाता दक्षिणस्याम् ॥ २५ ॥**

पूर्वं चलितः प्रतिप्रस्थाता स्थापनमपि कुर्यात् पूर्वम् । अतः पूर्वोऽध्वर्युरुत्तरवेद्यामित्युच्यते । दक्षिणस्यामिति वचनाद्वेद्यामेव स्थाप्यते तुल्यमुत्तरेण । न बहिर्वेदि-[ग]दर्शनात् ॥ २५ ॥

**अग्नीनन्वाधाय पृथक् शाखे आहरतः ॥ २६ ॥**

उभयत्रातिमुक्त्यन्तेऽग्न्यन्वाधानं [घ]सर्वेषामध्वर्युः[2] । अन्वाहित आहवनीये ऽध्वर्युणा प्रतिप्रस्थाता दक्षिणमग्निमन्वादधाति । [ङ]वर्तमानकालत्वादन्वाधीयमानजपस्या-

---

1 B. Ms. 1. 2. omits from अत एव to अनूह एव ।

2 उभयत्रातिमुक्त्यन्तम् । अग्न्यन्वाधानं सर्वेषामध्वर्युः ।

क. सर्वतोमुखो नाम क्रतुविशेषः यत्र चतसृष्वपि दिक्षु चतस्रो महावेदीर्निर्माय चत्वार्यायतनानि आहवनीयस्य कल्पयित्वा तत्राहवनीयश्चतुर्धा विभज्य स्थाप्यते हूयते च । अत्र चतुष्षष्टिः ऋत्विजः । तत्र पूर्वस्यां दिश्यग्निष्टोमसंस्था ।

ख. अन्तरा वेदी प्रतिप्रस्थातुः सञ्चरः आप. श्रौ. ( ८.२.११ ) इत्युक्तेऽपि पुनरन्तरा वेदी प्रतिप्रस्थाता प्रतिपद्यत इति वचनं कृतानुकारत्वेऽपि प्रतिप्रस्थातुः पूर्वं गमनार्थमिति । उत्तर उपचारो विहारः इत्यध्वर्योरुत्तरेण विहारे प्राप्तेऽपि उत्तरेणोत्तरां वेदिमध्वर्युरिति वचनं वेदेरुत्तरदेशेऽदूरेण नयनमग्नेः । नतु वेद्या उपरिष्टान्नयतीत्येवमर्थम् । इति ।

ग. एतदर्थमेव सूत्रे "जघन्यः प्रतिप्रस्थाता" इति दर्शनात् । इतरथा पूर्वोऽध्वर्युरित्येतावन्मात्रोक्तावपि क्रमसिद्धेरिति । अथवा वेद्याः पूर्वभाग एव न बहिर्वेदि, "अन्ततो हि देवानामाधीयते" इति वेद्यन्त एव निधानानुवाददर्शनाच्छ्रुताविति.

घ. सर्वेषां दक्षिणवैहारिकव्यतिरिक्तानाम् ।

ङ. तत्तदन्वाधानजपस्य तत्तदन्वाधानकालिकत्वं यथा स्यादिति ।

ऽऽवृत्तिः । यदि सद्यस्कालाः [क]अथ यज्ञाय वारुणप्रघासिकं हविरिदमेषामपीति । [ख]अन्तराग्निजपस्यावृत्तिः ॥ २६ ॥

**तथेध्माबर्हिषी ॥ २७ ॥ मारुत्याः प्रतिप्रस्थाता वत्सानपाकरोति । वारुण्या अध्वर्युः ॥ २८ ॥**

[ग]सकृदन्वाहितजपः । वेदी अन्तरेण[घ] गत्वा दक्षिणेन दक्षिणमाहवनीयमवस्थाय व्रतोपायनमुभावग्नी अभिसन्धाय । [ङ]शाखाच्छेदनादि मारुत्याः पूर्वं वत्सापाकरणस्य विधानात् ॥ २८ ॥

**शमीमय्यो हिरण्मय्यो वा स्रुचो भवन्ति ॥ २९ ॥**

दक्षिणस्य विहारस्य शमीमय्यो हिरण्मय्यो वा स्रुचः सह स्रुवेण [च]उत्तरस्य विद्यमानत्वात् पात्राणाम् । दक्षिणस्य सर्वपात्राणि शमीमयानीति बौधायनः । केचिदुभयोर्विहारयोः [छ]सूत्रकारेणाविशेषितत्वात् ॥ २९ ॥

**यथादेवतं सायं दोहौ दोहयतः ॥ ३० ॥**

मरुद्भ्यो देवभागम्, वरुणाय देवभागमिति कृतानुकारित्वे प्राप्ते यथादेवतं क्रमः । यथादेवतं सायं दोहाविति प्रतिप्रस्थातुः पूर्वं क्रमेण दोहनादेकापि शाखा भविष्यतीति [ज]पृथग्विधानम् । इध्माबर्हिश्च विभज्येत देशभेदात् कर्तृभेदाच्च भेदः । पृथगुपलक्षिता वत्सा

---

क. "अग्निं गृह्णामि" इति "श्वो यज्ञाय इत्यस्य स्थाने" अथ यज्ञायेति "इमामूर्जं" इति मन्त्रे "पौर्णमासꣳ हविः" इत्यस्य स्थाने "वारुणप्रघासिकं हविरि" ति चोहः कर्तव्य इति । See. आप. श्रौ. ४.१.८. for both.

ख. "अन्तराग्नी पशवो देवसꣳसदं" इति मन्त्रजपो ऽन्तराग्निजपः । ( See. आप. श्रौ. ४.१.९. )

ग. "इदमहमग्निज्येष्ठेभ्यः" इति मन्त्रजपो ऽन्वाहितजपः । ( See. आप. श्रौ. ४.२.२. )

घ. आहवनीयस्य पश्चिमभागेन वेदिद्वयमपि दक्षिणातिक्रम्य दक्षिणविहारस्थितस्याग्नेस्समीपे तिष्ठन् उभावग्नी इति मन्त्रमुक्त्वा व्रतोपायनं कुर्यादिति ।

ङ. मारुत्याः पूर्वं शाखाच्छेदनादि कर्तव्यम् । उत्तरसूत्रे मारुतीवत्सापकरणस्यैव पूर्वं विधानात्, तस्य च क्रमार्थत्वादिति ।

च. उत्तरविहारे प्राकृतानामेव पात्राणां सत्वात् न तत्र पात्रान्तरोत्पादनावश्यकतेति ।

छ. सूत्रे दक्षिणोत्तरविहारादिकमनुक्त्वा सामान्येनैव शमीमयत्वहिरण्मयत्वयोर्विधानादिति ।

ज. इदं च २५ सूत्रव्याख्यानं पूर्वमेव तत्रैव कर्तव्यमासीत्, परंतु दोहक्रमाधीनत्वाच्छाखाहरणस्य तद्व्याख्यानोत्तरकालमत्रोच्यत इति वेदितव्यम् ।

गावो दुह्यन्ते दोहेऽपि साधारणानामध्वर्युः । परिस्तरणमेकस्य । प्रतिप्रस्थाता सर्वमन्यत् क्रमेण । पृथक् पृथक् दर्भास्तरणादि । विभज्यते उच्छ्रेपणम् । [क]मरुद्भ्यो हविरिन्द्रियं वरुणाय हविरिन्द्रियं, मरुद्भ्योदेवेभ्यो हव्यमाप्यायताम्, वरुणाय देवेभ्यो हव्यमाप्यायताम् मरुद्भ्यो दधि, वरुणाय दधि । उभावग्नी इति तन्त्रेण ॥ ३० ॥

**सद्यस्काला वा वरुणप्रघासाः ॥ ३१ ॥**

यदा सद्यस्कालाः तदा प्रातर्दोह एव धर्मवान् ॥ ३१ ॥

**एवं सति लौकिकेन दध्नामिक्षाकर्म स्यात् ॥ ३२ ॥**

आमिक्षा क्रिया स्यात् लौकिकेन दध्ना ॥ ३२ ॥

**प्रातर्दोहविकारमेक आमिक्षापयस्यमाहुः ॥ ३३ ॥**

आमिक्षा पयस्या च आमिक्षापयस्यं, आमिक्षाशब्देन पयस्याशब्देन वा चोदिता यास्ताः प्रातर्दोहविकाराः । लौकिकेन दध्ना आमिक्षा । वैश्वदेवी तु प्रकृतित्वात् द्व्यहकाला, [ख]उभयदोहविकारश्चेत्युपदेशः ॥ ३३ ॥

**निर्वपणकाल आग्नेयमष्टाकपालमिति नवोत्तराणिहवींषि निर्वपति ॥ ३४ ॥ सर्वे यथा भवन्ति ॥ ३५ ॥**

यदामेषमेष्योर्धर्मवत्त्वं तदा प्रतिप्रस्थातुरप्यपराणि दश उभयत्र वैश्वदेववत् । न तु दक्षिणे प्राशित्रहरणमिडापात्रं च । यदा कुम्भीपाकः तदा स्थाली कपालधर्मिणी । यदा पत्नी करोति तदा प्रणीताप्रणयनमपि नास्ति । दक्षिणावत्सु [ग]नान्वाहार्यः । अध्वर्युरेव-वृणीते ब्रह्माणम् । ब्रह्मयजमानायतनकल्पनश्च दक्षिणविहारस्य दक्षिणतः । [घ]धुरोऽभिमर्शनं, ईषामालभ्य जपः परिणाहापच्छादनाद्यभिमन्त्रणान्तं अध्वर्युरेव । अवशिष्टाभिमन्त्रणश्च ।

---

क. "कामधुक्षः प्र णो ब्रूहीन्द्राय हविरिन्द्रियं" इति मन्त्रे बहुदुग्धीन्द्राय देवेभ्यो हव्यमाप्यायतां पुनः इति मन्त्रे सोमेन त्वाऽऽतनच्मीद्राय दधि इति मन्त्रे च 'इन्द्राय' इति 'मरुद्भ्यः' इति पदं मारुत्यां, 'वरुणाय' इति च वारुण्यां प्रक्षिप्य मन्त्रः प्रयोक्तव्य इति ॥ See. आप. श्रौ. सू. १.१३.३, १०, ११, respectively.

ख. "पूर्ववद्वैश्वदेव्यास्सायं दोहं दोहयति" (आप. श्रौ. सू. ८.१.१६.) इति विधानात् सायंदोहस्याऽपि समन्त्रकत्वमवगम्यते । अत उभयविकारता । अत एव द्व्यहकालतापीति उपदेशमतमिति ।

ग. अन्वाहार्यस्थान एव तत्र दक्षिणाविधानात् विहितया च तयाऽन्वाहार्यबाधान्नान्वाहार्यस्य प्रवृत्तिरिति।

घ. १.१७.६,७,९,१०, सूत्रेषूक्तान्येतानि दार्शपूर्णमासिकानि अङ्गान्यध्वर्युरेव कुर्यादिति ।

[क]अन्यदुभौकुरुतः । पात्रीनिर्वापे च[ख] ॥ ३५ ॥

**अपि वा पौष्णः करम्भपात्राणि मेषाविति यवानां व्रीहीणामितराणि ॥ ३६ ॥**

यदा पौष्णादीनि यवानां तदा नानाबीजधर्मोऽध्वर्योः ॥ ३६ ॥

**एतस्मिन् काले प्रतिप्रस्थाता तूष्णीं करम्भपात्रार्थान्यवान्निर्वपति ॥ ३७ ॥**

एतस्मिन् काले निरुप्ते काये करम्भपात्रार्थानां निर्वपणम् । प्रजानां करीरत्वाय । प्रतिपूरुषं करम्भपात्राणि भवन्तीति तत्र चोदितत्वात् ॥ ३७ ॥

**यजुषाध्वर्युर्मेषार्थान् । मेष्यर्थान्प्रतिप्रस्थाता ॥ ३८ ॥**

ऐन्द्राग्नान्तेषु निरुप्तेषु अध्वर्युणा प्रतिप्रस्थाता मरुद्भ्यो जुष्टं निर्वपामीति मेष्यर्थान् । वरुणाय जुष्टं निर्वपामीत्यध्वर्युः[ग] । करम्भपात्रार्थान्प्रतिप्रस्थाता । उपदेशः ऐन्द्राग्नान्तेषु निरुप्तेषु करम्भपात्रार्थानां निर्वापः, ततः मेषस्य[घ] मेष्याश्च । [ङ]काय, कस्मा इति वा ॥ ३८ ॥

**तयोराभिक्षावद्दैवतम् ॥ ३९ ॥**

शमीपर्णानि च करीरमिश्राणि [च]करम्भ इत्युच्यते । तस्य धारणार्थानि पात्राणि ॥३९॥

---

क. विष्णुस्त्वाक्रंस्त, अद्भुतमसि हविर्धानमित्यादि ।

ख. उभौ कुरुत इति ।

ग. मेषार्थानिति ।

घ. सूत्रे करम्भपात्रार्थान् यवान्निर्वपति इति विधाय तदनन्तरमेव यजुषाऽध्वर्युर्मेषार्थानिति विधानात् करम्भपात्रार्थनिर्वापानन्तरमेव मेषमेष्यर्थनिर्वाप इति । स्वमते तु काय एककपालो भवति । इति विधाय तदनन्तरं प्रतिपूरुषं करम्भपात्राणि भवन्ति इति निर्देशात् तेनैव क्रमेणानुष्ठानमिति ।

ङ. काय जुष्टं निर्वपामि, इति वा कस्मै जुष्टं निर्वपामि इति वा निर्वापमन्त्रः । 'काय' इति चतुर्थी । सर्वनामत्वाभावे रूपमिदम् । यद्यप्युत्तरत्र 'कायाऽनुब्रूहि' इति अग्रे सूत्रकारेणोक्तम्, तथापि तत्प्रदर्शनार्थम् । उभयथा शब्दप्रयोगदर्शनात् काय स्वाहा कस्मै स्वाहा कस्मै देवाय हविषा विधेम इत्यादौ ।

च. एवमेव रुद्रदत्तो महादेवश्च । (See A. S. B. ed. Part I, p. 27 and सत्या. श्रौ. An. ed. Part II p. 463. But Sāyaṇa differs here. He says दधिसिक्ता यवसक्तवः इति See सायणभाष्य or प्रतिपूरुषं करम्भपात्राणि भवन्ति । And see आप. श्रौ. १२.४.१३ मन्थं संयुतं करम्भ इत्याचक्षते ।

**आमपेषाणां पत्नी करम्भपात्राणि करोति ॥ ४० ॥**

प्रक्षालिता वा अतप्ताः क्लेशेन पिष्यन्ते इति तपनं क्रियते । तत्करम्भपात्राणां प्रतिषिध्यते । मेषप्रकृत्योश्च ॥ ४० ॥

**यावन्तो यजमानस्यामात्याः सस्त्रीकास्तावन्त्येकातिरिक्तानि ॥ ४१ ॥ आमपेषाणां मेषप्रतिकृती भवतः ॥ ४२ ॥ मेषमध्वर्युः करोति मेषीं प्रतिप्रस्थाता ॥ ४३ ॥**

अमा सहयोगे सह ये भवन्ति एकस्मिन् पात्रे भोजनाय तेऽमात्याः । प्रायेण पुत्रपौत्रनप्तारः सह भवन्तीति । सपिण्डा उपलक्ष्यन्तेऽन्यत्र[क] । इह तु त्र्यम्बकेषु च जाता एव प्रजा वरुणपाशान्मुञ्चति । जाता एव प्रजा रुद्रान्निरवदयते इति यजमानवंश्यानामेव ग्रहणम् । प्रतिपुरुषश्रुतेः स्त्रियो न स्युः । अतस्सस्त्रीका इत्युच्यते । प्रत्ताः स्त्रियो न गृह्यन्ते । स्नुषाश्च पुरुषस्थानापत्तेः । यजमानः सह पत्न्या गृह्यते, प्रतिपुरुषवचनात् । [ख]वचनाभावात्पक्वान्यपक्वानि वा करम्भपात्राणि ॥ ४३ ॥

इति पञ्चमी कण्डिका ॥

**स्त्रियाः स्त्रीव्यञ्जनानि । पुंसः पुंव्यञ्जनानि ॥ १ ॥**

[ग]व्यञ्जनविधानं कथं सर्वाणि व्यञ्जनानि क्रियेरन् इति । लोके स्वल्पकैरपि व्यञ्जनैर्मेषो मेषीत्युच्यते ॥ १ ॥

**अपि वा पूर्वेद्युरन्वाहार्यपचने वितुषानिव यवान्कृत्वा तेषामीषदुपतप्तानां पत्नी करम्भपात्राणि करोति ॥ २ ॥ अत्रापि मेषं मेषीं च करोतीति वाजसनेयकम् ॥ ३ ॥ ऐन्द्राग्नपर्यन्तान्यधिश्रित्यैकादशसु कपालेषु मेषीमधिश्रयति । अष्टासु मेषम् ॥ ४ ॥ कुम्भीपाक्यौ वा भवतः ॥ ५ ॥**

---

क. सोमोक्तवैसर्जनहोमादिषु । See आप. श्री. for वैसर्जनहोम See for त्र्यम्बक ।

ख. पेषणानन्तरं पाकविधानाभावात् यथासौकर्यं पक्वान्यपक्वानि वा करम्भपात्राणि कार्याणि, इति ।

ग. स्त्रीपुरुषप्रतिकृतिविधानादेवव्यञ्जनसिद्धेः पुनर्व्यञ्जनविधानं सर्वेषां स्त्रीव्यञ्जनानां पुंव्यञ्जनानां च करणार्थमिति ।

पूर्वेद्युरौपवसथ्येऽहनि [क]वितुषानिव यवान् कृत्वा ईषदुपतप्तानामामपेषाणाम् । मेषमेष्योरपि तूष्णीममन्त्रकं पत्न्या करणम् । लोमशत्वादि संस्कारः । पूषन् हव्यं रक्षस्व, इन्द्राग्नी हव्यꣳरक्षेथाम्, मरुतो हव्यꣳरक्षध्वम्, वरुण हव्यं रक्षस्व, क हव्यं रक्षस्व । इदमग्नेः, सवितुः, पूष्णः, इन्द्राग्न्योः, वरुणस्य, कस्य । इदं सोमस्य, सरस्वत्याः, इन्द्राग्निभ्यां जुष्टमधिवपामि । वरुणाय जुष्टमधिवपामि । काय जुष्टमधिवपामि । धान्यमसि धिनुहि देवान् । एवं संवापे संवपामीति । इदं सोमस्य, इदं सरस्वत्याः, इदं वरुणस्य, इदं कस्येति द्वितीये [ख]विभागे ॥ ५ ॥

**कायमेककपालमधिश्रित्याप्येभ्यो निनीयाग्नी प्रणयत इति वाजसनेयकम् ॥ ६ ॥**

अधिश्रित्य मेषौ [ग]सायंदोहनयनम् ॥ ६ ॥

**पशुवत्संप्रैषः । तथाज्यानि ॥ ७ ॥**

अधिश्रित्य वा कायं आप्येभ्यश्च निनीय, अग्न्योः प्रणयनम् । [घ]केचिद्विकल्पः । अधिश्रित्य [ङ]कायमाप्येभ्यो निनीयेति । [च]वेद्युत्तरवेदी कृत्वा द्वयोरन्वाधानम् । अग्निहोत्रार्थोऽन्यः । प्रणीयते यदि न सद्यस्कालाः । व्रतोपायनमासन्नेषु हविष्षु क्रियते । [छ]उलपराज्य आहवनीयदेशात् । आहवनीयस्योत्तरतो दर्भास्तरणादि । वैश्वानरं ज्योतिरिति गार्हपत्यस्थमाहवनीयं प्रेक्षते । अनेन प्रकारेण विधिस्सर्वः । प्रणीतयोरग्न्योरन्वाधानम् । अन्तराग्निजपोऽन्वाहितजपश्च । अत्र परिस्तरणमग्न्योः, उत्तरपरिग्रहादिविकारविवक्षया[ज] ॥ ७ ॥

---

क. फलीकरणवर्जं तुषमात्रविमुक्तान् कृत्वा इति रुद्रदत्तः ।

ख. अधिश्रयणात्पूर्वं द्वितीयो विभागः कर्तव्यः ।

ग. मेषयोरधिश्रयणानन्तरं तप्ते प्रातर्दोहे आमिक्षार्थं सायंदोहानयनमिति स्वपक्षः । अधिश्रित्य वा कायमित्यादिः वाजसनेयिपक्षः ।

घ. वाजसनेयकग्रहणात् विकल्पःसिद्ध्यतीति तेषां मतम् ।

ङ. See आप. श्रौ. १-२५-१५ for आप्यनिनयन, also see तै. ब्रा. ३.२.८ सोऽङ्गारेणापः इत्यादि for आप्य, *i. e.* एकत, द्वित, त्रित ।

च. वेदिद्वयमुत्तरवेदिं च कृत्वा दक्षिणाग्निं प्रणीय गार्हपत्यदक्षिणाग्न्योरन्वाधानमिति ।

छ. गार्हपत्यात्प्रक्रम्याऽऽहवनीयादुलपराजिस्तरितव्येति स्तरणदेशमात्रविधानात् अग्न्यभावेऽपि देशस्य विद्यमानत्वात् स्तरितव्यमेवेति ।

ज. वैश्वदेववत्कल्प इत्युक्तत्वादेव पशुवत्संप्रैषप्राप्तेः पुनर्वचनं उत्तरत्र पृषदाज्ये इत्यादि कथनार्थमिति । पूर्वोक्तप्रकारेण( ८-५-१ )श्रवणायां चेत् वरुणप्रघासा क्रियेरन्, तदा पशुबन्धवत् उभये स्संसृज्य पृषदाज्यग्रहणमिति ।

**पृषदाज्ये विकारः। महीनां पयोऽसीति पृषदाज्यधान्यां सकृदाज्यं गृह्णाति। द्विर्दधि द्विराज्यम् ॥ ८ ॥**

पशुवत्संप्रेषवचनम् ॥ ८ ॥

**यद्यु वै श्रवणायां संसृज्य गृह्णीयात् ॥ ९ ॥**

श्रवणायां चेत् पशुवदुभयोः ॥ ९ ॥

**उद्वासनकालेऽनैडकीभिरूर्णाभिर्मेषप्रतिकृती लौमशौ कुरुतः ॥ १० ॥**

वाजिनैकदेशेनोपसिच्याऽऽमिक्षामेषयोरुद्वासनम्। [क]आर्द्रा भुवनस्य गोप्त्री शृतोत्स्नाति जनित्री मतीनामिति मेष्याः। चरुवन्मेषस्य। [ख]उभयोस्तूष्णीमुपदेशः। उद्वास्य [illegible] शशादीनां प्राणिनां ऊर्णाभिः। एडकाः मेषाः। [1]तषा[illegible]का नेष्यन्ते। [2]अनैडकीभिरिति। केचिदाहुः—छागा मेषाश्चैडकाः। तेषामूर्णा नेष्यन्त इति ॥ १० ॥

**तदभावे कुशोर्णा निश्लेष्य मा[illegible]त्यां मेषमवदधाति। वा[illegible]ण्यां मेषीम् ॥ ११ ॥**

[3]प्राण्यूर्णानामभावे कुशोर्णानाम्। निश्लेषणं लगनम्। तत्कृत्वा मारुत्यामिक्षाया मेकस्मिन् पात्रे मेषं क्षिपत्यध्वर्युः, वारुण्यां प्रतिप्रस्थाता मेषीम्। व्यतीहरत इति उत्तरत्र वचनात्। विपरिवृत्तिर्व्यतिहारः। इह द्विवचननावचना[illegible] उभयोरवदानमध्वर्युरेव करोतीत्यन्ये ॥ ११ ॥

**अथाभ्यां शमीपर्णकरीरा[illegible]पवपति परः शतानि परः सहस्राणि वा ॥ १२ ॥**

तत्कृत्वा कायोद्वासनं क्रमेणाऽलंकृत्याभिपूर्यैककपालं शमीपर्णकरीराणामुपवपनम्। उपदेशोऽवधानान्तरमुपवपनम्। ततः कायोद्वासनादि अभिपूर्य आसादनान्तमेवेति। पञ्चाना-

---

1. Ad. B. Ms. reads ऊर्णा नेष्यन्ते।
2. B. Ms. omits from अनैडकीभिः to नेष्यन्त इति.
3. B. Ms. reads शशोर्णादीनाम्।

क. आर्द्रः प्रथस्नुर्भुवनस्य गोपाः शृत उत्स्नाति जनिता मतीनाम् ॥ इति मन्त्रोक्तविधया स्त्रीलिंगान्तैः पदैः ऊह इति।

ख. 'अष्टावुत्तरस्यां वेद्यां' इति वक्ष्यमाणहेतुनाऽऽमिक्षयोरेव प्रधानहविष्ट्वावगतेः मेषमेष्योस्तथात्वाभावात् नोद्वासनमन्त्रो मेषयोः। अतस्तूष्णीमुद्वासनमिति मतमुपदेशस्य।

—माग्नेयवत् सह कायेन सर्वम् । काय जुष्टमभिघारयामीति अभिघारणाद्येककपालधर्माश्च य आग्रयणे आम्नायन्ते । प्रातर्दोहधर्माश्चामिक्षाणां स्युद्धरणवाजिनेज्यादिरेव च वैश्वदेवधर्माः प्रत्यक्षविहिताः । शमी वृक्षः, तस्य पर्णानि शतं सहस्रं वा पराणि । [क]यत्परश्शतानि शमीपर्णानि भवन्तीति । [ख]करीराणि सोमाकृतेर्वृक्षस्य फलानि । न तेषां संख्यानियमः । तान्युपवपति क्षिपति मेषमेष्योर्भक्षणाय[ग] । अथाभ्यामिति कायस्याभिपूरणानन्तरं करम्भपात्रेषु शमीपर्णकरीराण्यध्वर्युरेव क्षिपति मेषमेष्योश्च ॥ १२ ॥

**करम्भपात्रेषु चान्वोप्याष्टावुत्तरस्यां वेद्यां हवींष्यासादयति ॥ एकां मारुतीं प्रतिप्रस्थाता दक्षिणस्यां करम्भपात्राणि च ॥ १३ ॥**

अष्टावुत्तरस्याम्, एकां मारुतीमिति संख्यावचनात् आसन्नाभिमर्शनादिसंस्काराः आमिक्षयोरेव, न मेषमेष्योः । [घ]आमिक्षान्तर्भावात् आमिक्षाधर्मा एव, नौषधधर्माः । प्रियेणेत्यासादनमुभयोः[ङ] । वैश्वदेवशुनासीरीययोरेव व्याहृतिभिः । चातुर्मास्यान्यालभमान इति श्रुतेः । सर्वत्र व्याहृतिभिरित्युपदेशः ॥ १३ ॥

**अत्र मेषप्रतिकृती व्यतिहरतः ॥ मारुत्यां मेषीमवदधाति । वारुण्यां मेषम् ॥ १४ ॥**

---

क. श्रुतेरनुकरणमिदम् । तै. ब्रा. १.६.४.५. यद्यपि सूत्रकारेणोभयोस्समासनिर्देशः कृतः शमीपर्णकरीरपर्णानीति, तथापि करीराणां संख्याविधेरभावात् अनियम इति ।

ख. Sāyaṇa says खर्जूरफलानि करीराणीति केचित् । तालवृन्तनिवासी states करीराण्यस्मिन् देशे न सन्ति गङ्गातीरे कुरुक्षेत्रादिषु । तेषामभावे प्रतिनिधिः, नित्यत्वात् । गेध्यफलानि बदरादीनि ।

ग. पिष्टमययोर्मेषमेष्योर्भक्षणासंभवाददृष्टार्थं क्षेपणम् । घासमेवाभ्यामपि यच्छति (तै. सं. १.६.४.३.) (इति) श्रुत्यर्थमनुवदितुं भक्षणायेत्युक्तम् ।

घ. यद्यपि पिष्टमययोरौषधधर्मत्वं युक्तं तथाप्यामिक्षान्तर्भावात् सान्नाय्यधर्मा एवेति ।

ङ. उभयोः अध्वर्युप्रतिप्रस्थात्रोः स्वस्यां स्वस्यां वेद्याम् । तच्च 'प्रियेण नाम्ना प्रियं सद आसीद' (आप. श्रौ. २.११.६.) इति विकृतिसामान्यं प्रत्युपदिष्टेनैव मन्त्रेण । यद्यपि चातुर्मास्यान्यालभमान एताभिर्व्याहृतिभिर्हवींष्यासादयेत् (तै. सं. १.६.१०.३) इति चातुर्मास्यसामान्ये व्याहृतिभिरासादनमुक्तं, तथापि तत् प्रथमान्तिमपर्वमात्रविषयमेव । वैश्वदेवे हि व्याहृतिभिर्हवींष्यासादयति (आप. श्रौ. ८.२.१०) इति व्याहृत्यासादनस्य विधानात् शुनासीरीये च 'तस्य वैश्वदेववत् कल्पः' इति वैश्वदेवधर्मातिदेशात् सामान्यतश्चातुर्मास्यमात्रे प्राप्तस्य प्रथमोत्तमपर्वगताभ्यां वाक्याभ्यामुपसंहारः क्रियत इति मध्यमपर्वणोः 'प्रियेण' इत्यनेनैवाऽऽसादनमिति ।

मेषीमवदधात्यध्वर्युर्मारुत्यां, मेषं वारुण्यां प्रतिप्रस्थाता। तत आसन्नाभिमर्शनं पञ्चहोत्रा ॥ १४ ॥

**पशुवन्निर्मन्थ्यौ सामिधेन्यश्च नव प्रयाजानूयाजाः ॥ १५ ॥**

निर्मन्थ्यौ वेदविधानादि वैश्वदेववत्। वाजिनद्वयमुत्करे। न च [क]मन्थने ऊहः, संसर्गित्वात्। [ख]नवत्वविधानात्पुनरेकं हुतानुमन्त्रणं प्रयाजानूयाजानाम्। सामिधेनीनाञ्च समिद्धानुमन्त्रणम्। 'उच्छुष्मो अग्ने[ग]' इति वर्तमानकालभेदादावृत्तिः। समिद्धो अग्निरिति तन्त्रेण। अध्वर्युरेव दैवं च मानुषं च होतारौ वृणीते साधारणत्वात्[घ]। सामिधेन्यनुज्ञानं प्रवरानुज्ञानं च न द्विवद्ब्रह्मा, अभिधेयैकत्वात् ॥ १५ ॥

**प्रघास्यान्हवामह इति प्रतिप्रस्थाता पत्नीमुदानयत्येतच्च वाचयति ॥ १६ ॥**

अध्वर्युः [ङ]सम्मार्गैः कृते परिधिसंमार्गे दक्षिणस्याऽपि स्वैः परिधीनां करोति। तत उत्तरस्याग्नेः कृते संमार्गे स्वैः सन्नहनैः प्रघास्यानिति[1] प्रतिप्रस्थाता करोति ॥ १६ ॥

**तां पृच्छति पत्नि कति ते जारा इति ॥ १७ ॥**

कतरास्ते जारा इति पृच्छति। पत्न्या त्वाख्यातव्यमेतावन्तो मे जारा इति। सत्या-

---

१ प्रघास्यान् हवामहे मरुतो यज्ञवाहसः करम्भेण सजोषसः। (तै. सं. १. ५. ३. १.)

क. मन्थनद्वयजन्ययोरग्न्योर्द्वित्वेऽपि न द्विवचनान्ततया मन्थनपदोहः। संसर्गिद्रव्यत्वादग्नेरिति।

ख. वैश्वदेवत एव सिद्धे नवप्रयाजत्वादिके पुनर्नवत्वविधानात् अन्ते तन्त्रेण सकृदेव हुतानुमन्त्रणं प्रयाजानूयाजानां सामिधेनीनां च समिद्धानुमन्त्रणम्। एतदर्थमेव पुनर्वचनमिति। एवं च दश होता 'अङ्गिरसो मास्य' इति च सकृदेवेति ( For these see ४.९-१,२. )

ग. 'उच्छुष्मो अग्न' इति समिध्यमानानुमन्त्रणत्वात् कृतानुकारित्वे समिन्धनस्य भिन्नकालिकत्वात् मन्त्रस्यावृत्तिः। 'समिद्धो अग्नि'रित्यस्य तु समिद्धानुमन्त्रणत्वात् अन्ते तन्त्रेणेति ( See आप. श्रौ. ४. ८. ३. )

घ. होतुः वेदिद्वयसाधारणत्वात् अध्वर्युणैकेनैव वरणे कृते उभयत्र तन्निष्पत्तेरिति। यद्यपि पूर्वं 'द्विवद्ब्रह्मा' ( आप. श्रौ. ८. ५. ८. ) इति द्विवचनेनानुज्ञोक्ता, तथाप्यत्र एकवचनेनैव, होतुरेकत्वादध्वर्योश्च वरणकर्तुरेकत्वादिति।

ङ. सम्मार्गशब्दोऽत्र सम्मार्गसाधनीभूतेध्मसन्नहनतृणवाची।

ख्यानादेव तस्याः शुद्धिः । न च प्रवृत्ते कर्मणि प्रायश्चित्तार्थमपनीयते, [क]कर्मवैगुण्यात् ॥ १७ ॥

**यानाचष्टे तान्वरुणो गृह्णात्विति निर्दिशति ॥ १८ ॥**

तान् वरुणो गृह्णात्विति निर्दिशति । निवृत्तिर्यस्या न सन्ति जाराः ॥ १८ ॥

**यज्जारं सन्तं न प्रब्रूयात्प्रियं ज्ञातिं रुन्ध्यात् । असौ मे जार इति निर्दिशेत् । निर्दिश्यैवैनं वरुणपाशेन ग्राहयतीति विज्ञायते ॥१९॥**

यः प्रियो ज्ञातिः तस्य निरोधनं स्रोतसां भवति यदि जारान्नाचष्टे ॥ १९ ॥

**संमृष्ट उत्तरोऽग्निर्भवत्यसम्मृष्टो दक्षिणः । अथान्तरा वेदी यजमानः पत्नी चोत्तरेण वोत्तरां वेदिमैषीके शूर्पे करम्भपात्राण्योप्य शीर्षन्नधिनिधाय पुरस्तात्प्रत्यञ्चौ तिष्ठन्तौ दक्षिणेऽग्नौ शूर्पेण जुहुतः ॥ २० ॥**

असंमृष्टो दक्षिणोऽग्निः तस्यापि परिधयस्संमृष्टाः । [ख]अथैतत्कर्म क्रियते-प्रघास्यानित्येवमानिर्देशान्तम् । ततोऽन्तरा वेदी गच्छतः उत्तरेण वोत्तरां वेदिम् । ऐषीकतृणशलाकाभिः कृते शूर्पे करम्भपात्राण्योप्य द्वयोश्शिरसोस्स्थाप्यते ॥ २० ॥

**[1]मो षू ण इन्द्रेति यजमानः पुरोऽनुवाक्यामन्वाह । [2]यद्ग्राम इत्युभौ याज्याम् ॥ २१ ॥**

[ग]पुरोऽनुवाक्या त्र्यवसाना । याज्यापि त्र्यवसाना स्वाहाकारान्ता ॥ २१ ॥

**[3]अक्रन्कर्म कर्मकृत इति विपरायन्तौ जपतः ॥ २२ ॥**

---

१ मो षू ण इन्द्र पृत्सु देवास्तु स्म ते शुष्मिन्नवया । मही ह्यस्य मीढुषो यव्या । हविष्मतो मरुतो वन्दते गीः ॥ (तै. सं. १. ८. ३. १.) इति पुरोऽनुवाक्या ।

२ यद् ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये । यच्छूद्रे यदर्य एनश्चकृमा वयम् । यदेकस्याधि धर्मणि तस्याऽवयजनमसि स्वाहा ॥ (तै. सं. १. ८. ३. १) इति याज्या ।

३ अक्रन्कर्म कर्मकृतः सह वाचा मयोभुवा । देवेभ्यः कर्म कृत्वाऽस्तं प्रेत सुदानवः । (तै. सं. १. ८. ३. २).

क. कर्मप्रवृत्त्यनन्तरं जारसम्भव एवैतत्प्रश्नप्रतिवचनादिकम् । न पूर्वम् । पूर्वं जारिण्याः अकृतप्रायश्चित्तायाः कर्माधिकारादिति रामाग्निचित् ।

ख. एतत्कर्म 'प्रघास्यान् हवामहे' इत्यारभ्य वरुणो गृह्णात्विति निर्देशान्तं पूर्वोक्तमिदानीमेव कर्तव्यम् । होमाङ्गत्वात् । तत् कृत्वा ततो वेदिसमीपगमनादिकमिति ।

ग. 'मो षू ण इन्द्र' इति पुरोऽनुवाक्या । 'यद् ग्रामे यदरण्ये' इति याज्या । तत्पाठप्रकारस्तु नीचैर्द्रष्टव्यः ।

विपरायन्तौ । तयोः पृथक् गमनं स्वस्थानगमनार्थम् । 'संमृष्ट उत्तर' इति वचनादुत्तरविहारेऽप्यन्यत्कर्म न क्रियते ॥ २२ ॥

**अपि वाध्वर्युः प्रतिप्रस्थाता वा जुहुयात् । अन्वारभेयातामितरौ ॥ २३ ॥**

यदाप्यन्वारम्भो यजमानयोः तदाऽप्यक्रन्निति जपः ॥ २३ ॥

**अत्र दक्षिणमग्निं संमार्ष्टि ॥ २४ ॥**

संमृष्टे वा दक्षिणेऽञ्जलीकरणादि क्रमेणैव । उभयत्र याजमानञ्च । आज्यभागयोरप्येकमनुमन्त्रणम् । वषट्कर्तुरेकत्वाद्विभवित्वाच्च । तथा स्विष्टकृतः । आवृत्तिरुपदेशः ॥ २४ ॥

**ऐन्द्राग्नपर्यन्तैः प्रचर्य विरमत्यध्वर्युः ॥ २५ ॥**

अध्वर्युर्वषट्कारेण जुहोति । वषट्कृते प्रतिप्रस्थाता वेति । इष्ट्वाऽऽज्यभागौ प्रतिप्रस्थाता विरमति । तत आग्नेयादिभिरैन्द्राग्नपर्यन्तैः प्रचर्य विरमत्यध्वर्युः ॥ २५ ॥

**अथ प्रतिप्रस्थाता पूर्वेण सहावदानेन मारुत्याः सर्वां मेषीमवद्यति । उत्तरेण शमीपर्णकरीराणि ॥ २६ ॥ अथ प्रचरति ॥ २७ ॥ अथाध्वर्युः पूर्वेण सहावदानेन वारुण्याः सर्वं मेषमवद्यति । उत्तरेण शमीपर्णकरीराणि । अथ प्रचरति ॥ २८ ॥**

इति षष्ठी कण्डिका ॥

**कायानुब्रूहि कं यजेत्येककपाले संप्रैषौ ॥ १ ॥ नभश्च नभस्यश्चेति चतुर्भिर्मासनामभिरेककपालमभिजुहोति ॥ २ ॥**

मारुत्या आमिक्षाया यदवदानं पूर्वं तेन सह मेषीमवद्यति । न चोहः, मेषयोः[क]खण्डनाभावात् । द्वितीयेन शमीपर्णकरीराणि । द्वितीयाच्च पात्रात् अवदानद्वयं । ततो मरुद्भ्योऽनुब्रूहीति । सान्नाय्यवदनुमन्त्रणमामिक्षायाः । इन्द्रयाजिनः इन्द्रियावी भूयासम्, महेन्द्रयाजिनः 'जेमानं महिमानं [ख]गमयेयमिति । विशेषधर्मा एव वैश्वदेव्यामिक्षासु

क. आमिक्षामेषयोस्सहावदाने क्रियमाणे पृथक् मेष्या मेषस्य चाऽवदानाभावात् द्विवचनान्ततया मन्त्रस्योहो न कर्तव्य इति । एवं चाऽऽमिक्षावदानार्थमेवायं मन्त्रो न मेषावदानार्थमिति फलितम् ।

ख. वैश्वदेववत् प्राणैस्सायुज्यं गमेयमिति नानुमन्त्रणमिति ।

व्युद्धरणादिवाजिनेज्यादयः, अनुमन्त्रणं तु देवताश्रयः (यो) नामिक्षाविशेषधर्मः । चरुपुरोडाशाज्यसान्नाय्यपशूनां तु तत्क्रियते । अतो नैतस्य प्राप्तिः । एवमेककपालस्यापि ये विशेषधर्मा पूरणादयः त एवैककपालानां, नानुमन्त्रणम् । अतः[1] कस्याहं देवयज्यया ऽन्नादो भूयासमित्येव समुच्चय आशिषाम् । मरुतामहं देवयज्यया जेमानं महिमानं गमेयमिति इन्द्रियाव्यन्नादो भूयासं वरुणस्याहं देवयज्यया जेमानं महिमानं गमेयमन्नादो भूयासमिति पूर्ववत् । सान्नाय्यवदुपदेशः, मुख्यत्वात्[क] । उभयोरिध्म[ख]सन्नहनयोरन्वारम्भ आग्नीध्रस्य । धूननञ्च होतुः, उभयस्य कर्माङ्गत्वात् । प्रत्याश्रवणे[ग] च स्फ्यसम्मार्गयोरुभयोर्धारणम् । [घ]होतृसंस्कारत्वाद्वा एकस्य सन्नहनस्य धूननम् ॥ २ ॥

**तदु हैके पृथगिडे निरवद्यन्ति । तदु तथा न कुर्यात् । सप्तानां हविषां समवदायाध्वर्युः प्रतिप्रस्थात्रे प्रयच्छति । तस्मिन्प्रतिप्रस्थाता मारुत्या अन्ववदधाति ॥ ३ ॥**

यदा पृथगिडे निरवद्यन्ति तदापि सहोपहवः । अनूहश्चेडाशब्दस्य देवताभिधानात्[ङ] । प्रतिप्रस्थाता स्वामन्वारभते । होतोभयं धारयति । उभयत्राऽऽस्वान्तरेडा । यदाऽपि सहोपहव अन्वारम्भश्चोभयोः[च] । उपहूत इति जपश्च । अध्वर्योः पर्वाञ्जनमुपस्तीर्णाभिघारणे च ॥ ३ ॥

---

1　B. Ms 1 reads as follows :—अतः कस्याहं देवयज्यया जेमानं महिमानमिन्द्रियावी वा । वरुणस्याहं etc.

क. मेषयोरधर्मकत्वात् आमिक्षयोर्मुख्यत्वाच्च तन्निबन्धनैवाऽऽशीरिति ।

ख. 'इध्मसन्नहनान्याग्नीध्रोऽन्वारभ्य' इति विहितमन्वारम्भणं उभयोरिध्मसन्नहनयोराग्नीध्रेण कर्तव्यम् । एवं होत्रा कर्तव्यं तद्विधूननमिति ।

ग. 'स्फ्यं सम्मार्गांश्च धारयन् प्रत्याश्रवयति' ( आप. श्रौ. २. १५. ४. ) इति विहितस्फ्यसम्मार्गधारणमुभयोरपि विहारयोः कर्तव्यम् । तत्तद्विहाराङ्गत्वात्तत्तद्धारणस्येति ।

घ. 'इध्मसन्नहनानि मुखं प्रति विधूनुते' इति विधिना विधूननस्य होतृसंस्कारत्वावगतेः एकस्यापि विधूनने तत्सिद्धेरेकस्यैव तदिति ।

ङ. इडोपाह्वानमन्त्रेण तृप्तिरूपदेवताया एवाऽभिधानात् तस्याश्चैकत्वात् एकवचनान्तस्यैव प्रयोगो मन्त्रस्य, न द्विवचनान्ततयोह इति ।

च. उभयोः अध्वर्युप्रतिप्रस्थात्रोः । 'उपहूतः पशुमानसानि' इति जपोऽप्युभाभ्यां कार्य इति । अत्र तदुहैके पृथगिडे निरवद्यन्ति इत्येकः पक्षः । तदु तथा न कुर्यादिति निषेधः । ततस्सप्तानामिति सहावदानविधिः । तेन पक्षद्वयमपि विकल्प्यते ।

**उपहूतां प्राश्नन्ति ॥ ४ ॥**

उपहूतयोः स्वां स्वामध्वर्यू प्राश्नीतः । इतरे [क]सर्वम् । कृते चतुर्धाकरणे आग्नेय-विकाराणाम् ॥ ४ ॥

**यः प्रवया इवर्षभः स दक्षिणा ॥ ५ ॥**

यः प्रवया प्रवृद्धवया इव ऋषभः सेचनसमर्थः । वृद्धः, अणूकः, तरुण इति वचनात् । केचित्प्रवयः प्रथमवया इति ॥ ५ ॥

**कामं तु ततो भूयो दद्यात् ॥ ६ ॥ धेनुर्दक्षिणेत्येके ॥ ७ ॥**

कार्मा[illegible] ऋषभादन्यदपि दीयते । अन्वाहार्यधर्मा दर्शपूर्णमासविकाराणाम् । न तूपदेशः । उत्तरस्यां वेद्यां दक्षिणास्सायन्ते । सर्वे प्रतिगृह्णन्ति । पूर्ववत्संमार्गः । क्रमेण समिदाधानमाग्नीध्रस्य पर्यायेण च याजमानम् । तन्त्रेणानूयाजानाम्[ख] । व्यूहनादि पर्यायेण । एको मन्त्र उपभृत्पृषदाज्यधान्योः[ग] ! क्रमेणाग्नीध्रस्योद्यमनम्[घ] ॥ ७ ॥

**परिवत्सरीणां स्वस्तिमाशास्ते । दिव्यं धामाशास्त इति सूक्त-वाकस्या[illegible]षु होतानुवर्तयते । एवं यजमानो जपति । आशास्त इति मन्त्रं [illegible]नमति ॥ ८ ॥**

परिवत्सरीणां स्वस्तिमाशास्त इति रोहितेनेत्यस्य पुरस्तात् । नामिक्षाणां प्राशित्रं सान्नाय्यवत् ॥ ८ ॥

**उभौ वाजिनाभ्यां प्रचरतः ॥ ९ ॥**

अध्वर्योर्वाजिनेऽवानयति शेषं प्रतिप्रस्थाता । ततो भक्षयन्ति ॥ ९ ॥

**शेषौ [illegible]मवनीयोत्तरे विहारे पूर्ववद्भक्षयन्त्या मा विशन्त्विन्दव आ गल्गा [illegible]वनानां रसेन मे रसं पृण । तस्य ते वाजिभिर्भक्षंकृत-स्येति समानम् ॥ १० ॥ पूर्णपात्रवर्जं पूर्ववदिष्टिं संस्थापयति ॥ ११ ॥**

---

क. संसृज्य प्राश्नन्तीति शेषः ।

ख. हुतानुमन्त्रणमिति शेषः ।

ग. अथा सपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यातामिति ।

घ. रोहितेन त्वा इत्यादिभिः त्रिभिर्मन्त्रैः क्रमेण तत्तद्देवसंबन्धिनः प्रह्रियमाणस्य प्रस्तरस्योद्यमनमिति ।

पूर्णपात्रवर्जम् । यजमानपत्न्योरुभयोः[क] । इष्टिमुभौ[ख] संस्थापयतः सहापराग्नि-होमैः । उभयत्र कृत्स्नं तन्त्रमिति वचनात् । यजमानमार्जनकालेऽवभृथः । कृतेऽवभृथे उत्तरमुभयोरेकस्य वा । अपराग्निहोमा अपि भवन्ति । पत्नीसंयाजा अपि भवन्तीति व्याख्यानात् । उपदेशः संस्थापयतीत्येकवचनात्पत्नीसंयाजान् वैश्वदेववदध्वर्युरेव करोति । [ग]उभयत्र कृत्स्नं तन्त्रमिति पूर्वेणोभौ । [घ]पुरस्ताद्यज्ञशंचमाच्चाऽवभृथ इति । वषट्कारैकत्वा-त्पत्नीसंयाजानां तन्त्रेण याजमानं [1]न्याय्यम् । आज्येडाद्वयश्च । उभावाज्यबिन्दूनन्वारंभश्च । पूर्ववद्दक्षिणाग्निहोमाश्च । वेदयोरुभयोरूहेन [ङ]प्रासनं उभयसंस्कारत्वात् । विन्दते प्रजामित्ये-कस्य वा पत्नीसंस्कारत्वात् । यजमानः स्वस्ववेद्योर्निधाय वेदौ[च] पर्यायेणाभिमृशति । न योक्त्रविमोकादि पत्न्याः । उत्तरत्र[छ] विमोकात् विद्यते तूत्थानमन्त्रः । अङ्गत्वाद्वेदस्तरणं पर्यायेण स्वस्ववेद्योः । प्रायश्चित्तानि समिष्टयजूंषि च वेद्योरभिस्तरणे कृते विमोके च प्रणीतानाम् । "एष वै दर्शपूर्णमासयोरवभृथः" इति मार्जनप्रत्याम्नायः, अविमुक्तत्वाद्यज्ञस्य । वरुणप्रघासार्थं कृतमन्यस्याप्यर्थं साधयति । कपालानि चाविमुक्तानि । एककपालस्य कपाल-मपि । आयज्ञविमोकाद् द्रव्यसंस्कारा नापयान्ति येष्वपि विमोक यथाऽग्नेः 'विते मुञ्चामि

---

1 Ad. Ms. reads कार्यम् ।

क. 'यत्पूर्णपात्रमन्तर्वेदि निनयति' इति अन्तर्वेदि प्रणितामार्जनं यजमानस्य । सयोक्त्रेऽञ्जलौ पूर्णपात्र-मानयतीति पत्न्याः । एतद् द्वयं वर्जयित्वाऽन्यत् सर्वमिति ।

ख. अध्वर्युप्रतिप्रस्थातारौ ।

ग. यदि अध्वर्युरेव पत्नीसंयाजान् करोति तर्हि उभयत्र कृत्स्नं तन्त्रम् ( आप. श्रौ. ८. ५. ७ ) इति वेदिद्वयेऽपि कृत्स्नाङ्गानुष्ठानविधानं कथं संगच्छेत ? इति शङ्कायास्समाधानमिदम् । हविश्शेषभक्षणा-न्तेन पूर्वेण कर्मसमुदायेनौभौ कुरुतःतत्सूत्रमिति । अस्मिन् पक्षे "अपि पत्नीसंयाजा" इति सूत्रं पत्नीसंयाजा अपि यदा कर्तव्याः, तदा किमु वक्तव्यं हविश्शेषभक्षणान्तस्य तन्त्रस्येति कैमुतिकन्यायेन व्याख्येयम् ।

घ. इष्टिसंस्थापनानन्तरमेवाऽवभृथविधानात् संस्थाजपमपि कृत्वैवाऽवभृथः कर्तव्य इत्युपदेशमतमिति ।

ङ. "वेदौ स्थो वित्ती स्थो विदेयकर्मणी स्थः करणे स्थः क्रिया॑सनी स्थः सनितारौ स्थः सनेयं घृतवन्तं कुलायिन॑रायस्पोष॑सहस्रिणं वेदौ दत्तां वाजिनम्" इति मन्त्रस्योहः ।

च. 'वेदं होता पत्न्या उपस्थे त्रिः प्रास्यति' ( आप. श्रौ. ३. ४. ३ ) इति विहितं प्रासनमुभयो-र्वेदयोः प्रतिपत्तिसंस्कारत्वात् । अथवा एकस्यैव वेदस्य प्रासनं पत्निया उपस्थ आदधाति । विन्दते प्रजाम् ( तै. ब्रा. ३. ३. ८ ) इति पत्नीगतफलश्रवणात् पत्नीसंस्कारकत्वावगतेः एकस्य प्रासनेनैव तत्सिद्धेरिति । अस्मिन्पक्षेऽनूह एव मन्त्रस्य ।

छ. See आप. श्रौ. सू. ८. ८. १४ for योक्त्रविमोक.

रशना विरश्मीनित्याहैव वा अग्नेर्विमोक इति । [क]कस्तम्भीसादनं[1] न स्रुचोर्विमोक उक्तं भरद्वाजेन । तेषामप्यासादनम् । प्रोक्षणादयः संस्काराः अग्निसंस्काराश्च नापयान्ति विमुक्तानामप्यत्र कर्माङ्गत्वात् । योगमात्रं त्वपां स्रुचां च क्रियते [ख]युनज्मि वो ब्रह्मणा दैव्येनेत्यपाम् । एता असदन्निति स्रुचाम् । [ग]संविशन्तामिति वा । [घ]इष्टेन्धनेन वा योगः इन्धानास्त्वा सुप्रजसः सुवीरा इति लिङ्गात् । न चेन्धनमपागिति निवृत्तिस्संस्कार एव वा [2]कस्तम्भीसादनं, न विमोकः स्रुचोः, अवचनात्[ङ] । न पुनस्संस्कारःस्रुचोरपि । असिदादानादि बर्हिराहृत्य, नान्वाधानं [च]परिगृहीतत्वात् वेदिपक्षे । ततो वेदो[छ] यदि स्तीर्णः । यद्यस्तीर्णः स एवादीयते । [ज]समूहनोपलेपनादि कृत्वा । [झ]सादनमेव वेदस्य प्रणीतापात्रस्य च । [ञ]विमुक्तत्वात् प्रणीताप्रणयनादि । एककपालपक्षे प्रणीय प्रणीताः कृत्वा पवित्रे [ट]संविशन्तामिति वेदाभिमर्शनमनूहेन । प्रकृतावप्यसंभवे बहूनां वै लिङ्गात्[ठ] । ततः स्रुगादानादि निर्वपणान्तं कृत्वा हविः प्रोक्ष्य वेदप्रोक्षणमनूहेन सम्मर्शनवत् । अध्यूहनाद्येककपालस्य उपहि-

---

1. 2. B. Ms. reads कस्तम्भीसादनम् ।

क. कस्तम्भी उपस्तम्भनार्था शकटस्य See आप. श्रौ. ३. ८. ४ भाष्य also रुद्रदत्त. कं शकटं तद्यत्र स्तभ्यते सा कस्तम्भी ।

ख. एतन्मन्त्रोच्चारणमेव योगः ।

ग. अनेन मन्त्रेण सम्मर्शनमेव योगः ।

घ. दृष्टविधयाऽग्नेरिन्धनं दीपनमेवाऽग्नियोगः । तच्चाप्सु न भवितुमर्हतीति तत्र निवृत्तिस्तस्य 'युनज्मि त्वा' इति मन्त्रस्य ।

ङ. कस्तम्भ्यां जुहूपभृतयोरासादनमन्तरा पृथक् विमोकस्याश्रवणादिति ।

च. अन्वाधानस्य देवतापरिग्रहार्थत्वात् देवतानां च वरुणप्रघासारम्भ एव तदीयान्वाधानेन परीगृहीतत्वाच्चात्र पृथगन्वारम्भ इति । वेदिपक्ष इति बर्हिराहृत्येत्यनेन संबद्ध्यते । उत्तरत्र 'अपि वा न वेदिः' ( आप. श्रौ. ८.७.२४ ) इति वक्ष्यति । अतो वेदेः विकल्पोऽवभृथे । यदि पक्षस्तदा तदर्थं बर्हिराहरणमिति ।

छ. पत्न्या निरसनोत्तरकाले वेदस्तरणमिति कश्चित् पक्षः । तस्मिन् पक्षे स्तरणस्योत्कर्षो भवति । तदपेक्ष्य, यदि स्तीर्णः यद्यस्तीर्ण इति कथनम् । एवं च यदि स्तीर्णो वेदः, तर्हि पुनर्वेदिं कुर्यात् । यदा न स्तीर्णः तदा न स्तीर्णः तदा स एव गृहीतव्य इति ।

ज. See आप. श्रौ. १.६.११.　　　झ. See आप. श्रौ. १.१५.७.

ञ. वरुणप्रघासान्ते प्रणीताविमोकस्य कृतत्वात् पुनः प्रणीताप्रणयनं अत्र कर्तव्यमिति । See आप. श्रौ. for विमोक ।

ट. See आप. श्रौ. १.१६.१२.

ठ. प्रकृतावपि बहूनां युगपत्सम्मर्शनासम्भवेन एकस्य द्वयोर्वा सम्मर्शनप्राप्तौ तत्र बहुवचनस्याऽसमवेतार्थत्वापदृष्टार्थत्वावश्यम्भावात् तथा चात्राप्येकस्मिन् वेदे बहुवचनान्तस्यानूहेनैव प्रयोग इति ।

-तत्वात् तप्यस्वेति[1] चोहः। तत [क]आप्यलेपनिनयने कृते प्रोक्षणीरासादय बर्हिरुपसादयाऽऽ-ज्येनोदेहीति। निष्कासपक्षे वेदमासाद्य [3]पवित्रेण सम्मृश्य प्रोक्ष्य प्रैष एव प्रोक्षणीरासाद-येति। न यज्ञयोगः। सर्वपक्षेषु कृतत्वात् ॥ ११ ॥

**पूर्णपात्रस्य स्थाने सौमिकोऽवभृथः॥ चतुर्गृहीतान्याज्यानि॥१२॥**

प्रैषोक्तेषु कृतेषु कर्मसु चतुर्गृहीतान्याज्यानि पञ्चावत्तिनोऽपि। यद्यनूयाजाः तदा '[ख]पञ्चानां त्वेति' द्वाभ्यां 'चरोस्त्वे'ति द्वाभ्यां यदा नाऽनूयाजाः तदाद्यैरेव 'पञ्चानां त्वा दिशामि'ति। इह न [ग]प्रोक्षण्यभिमन्त्रणादि ॥ १२ ॥

**वारुण्यै निष्कासेन तुषैश्चावभृथमवयन्ति। तुषा ऋजीषधर्मं लभन्ते। वारुणमेककपालमेके समामनन्ति ॥ १३ ॥**

आज्यग्रहणेभ्यः [घ]पुरोडाशादङ्गारापोहनादि। वरुणाय जुष्टमभिघारयामीत्यभि-घारणम्। अलंकृत्योदकसमीपगमनमेव। निष्कासपक्षे गृहीत्वाज्यानि गमनमेव तुषान् हविराज्यानि च गृहीत्वा ॥ १३ ॥

**नायुर्दा नाभिप्रव्रजनमन्त्रं न साम गायति ॥ १४ ॥**

आयुर्दाग्रहणेन [ङ]प्रयास्यतो होमानां प्रतिषेधः। न [च]गमनमन्त्र उरुं हि राजेति ॥ १४ ॥

**सर्वा दिशोऽवभृथगमनमाम्नातम् ॥ नोदीचीरभ्यवेत्या इत्येके ॥ १५ ॥**

उदीचीरापः उदीच्यां भवाः ॥ १५ ॥

---

1 Ad. Ms. 1 omits च. B. Ms. 1 reads चोह: कृतः।

2 B. Ms. 1 reads तत्र.

3 B. Ms. 2 reads सपवित्रेण.

क. See आप. श्रौ. १ १५ १५.

ख. पञ्चानां त्वा दिशां, पञ्चानां त्वा पञ्चजनानां, चरोस्त्वा, ब्रह्मणस्त्वा। See for this मन्त्र आप. श्रौ. १. ७. ८. footnote.

ग. See आप. श्रौ. ४. ५. ६.  घ. See आप. श्रौ. १. २८. ६.

ङ. आयुर्दा अग्ने, अवभृथ निचङ्कुण, नमो रुद्राय, इति मन्त्रत्रयकरणका होमाः प्रयास्यद्धोमाः। (See आप. श्रौ. १३. १९. १०).

च. उरुं हि राजेति गमनमन्त्रः। तै. सं. १ ४ ४१ अनुवाके द्रष्टव्यः।

**यां दिशं गच्छेयुस्तथामुखाः प्रचरेयुरित्येके ॥ १६ ॥**

यां [क]दिशं प्रति गच्छन्ति सा प्राची ॥ १६ ॥

**वहन्तीनां स्थावरा अभ्यवेत्याः ॥ तदभावे याथाकामी ॥ १७ ॥**

**उदकान्ते स्तरणान्तां वेदिं कृत्वा तस्यां हवींषि सादयति ॥ अपि वा न वेदिः ॥ शतं ते राजन्भिषजः सहस्रमित्यपो दृष्ट्वा जपति ॥ १८ ॥**

शतं ते राजन्निति कृत्वा जपं, प्राप्य स्फ्यादानादि वेदिकरणम् । कृते [ख]उत्तरपरिग्राहे धा असीत्येवमाद्यनुवीक्षणान्तम् । प्रोक्षण्यभिमन्त्रणादि । [ग]उदकं प्रत्यपादीयते प्रस्तरः । तस्य चाभिमन्त्रणम् । सूर्यो वः पुरस्तात्पात्विति । न [घ]वा परिध्यर्थत्वात् । आदित्यो ह्येवोद्यन्निति । 'युनज्मि वो ब्रह्मणा दैव्येने'त्यपां योगः [ङ]निवृत्तिर्वा, इन्धनलोपात् । ततस्तीर्णायां विधृत्यादेव । आज्यान्यभिमन्त्र्य हविस्सादनम् । आग्नेयवदासन्नाभिमर्शनं वारुणस्य निष्कासस्य च सान्नाय्यवत् । 'आमिक्षा मां पिनोत्वि'ति चोभयविकारत्वे [च]एकदेशस्यापि ॥ १८ ॥

**अभिष्ठितो वरुणस्य पाश इत्युदकान्तमभितिष्ठन्ते ॥ १९ ॥**

परिस्तीर्य वेद्यन्तानुदकान्तमारोहति अभिष्ठित इति । अवेदिपक्षे न वेद्यर्थं बर्हिरासादनं, नापि प्रोक्षणीरा( ण्या )सादनम्, तुल्यमन्यदुभयोरपि पक्षयोः । अपो दृष्ट्वा जपादुदकान्तमेवोपतिष्ठन्ते ॥

**अपः प्रगाह्य तिष्ठन्तोऽवभृथेन चरन्ति ॥ २० ॥**

---

क. यां दिशं गच्छन्ति यजमानप्रभृतयः सा प्राची मन्तव्येति ।

ख. See आप. श्रौ. २. ३. ७ for उत्तरपरिग्राह also १० for अनुवीक्षण

ग. आहवनीयं प्रत्यपादातव्यो यः प्रस्तरः तमाहवनीयस्थानापन्नमुदकं प्रत्यपादत्ते ( शनैरादत्ते ) इति । ( See आप. श्रौ. २. ८. ५ ).

घ. न पुरस्तात् परिदधाति, आदित्यो ह्येवोद्यन् पुरस्ताद्रक्षांस्यपहन्ति. तै. सं. २. ५. इति परिधिपरिधानस्थानेऽस्याऽभिमन्त्रणस्य विहितत्वान्नानेन प्रस्तराभिमन्त्रणमिति ।

ङ. युनज्मि ह वेति मन्त्रे उत्तरार्धे 'इन्धानास्त्वा' इति श्रवणादस्येन्धनार्थत्वावगतेः अप्सु च तदभावान् मन्त्रस्य निवृत्तिरिति । ततश्च सूर्यो व इति युनज्मि व इत्युभयोरपि मन्त्रयोर्निवृत्तिर्वेदितव्या ।

च. पूर्वमभिमृष्टामिक्षैकदेशत्वेऽपि निष्कासस्याऽऽमिक्षात्वात् स्वातन्त्र्येण तस्य हविष्ट्वादुभयविकारवत्सान्नाय्यमन्त्राभ्यामभिमर्शनमिति ।

अपः प्रगाह्य प्रविश्य उदकं सर्वे तिष्ठन्तः उत्थिताः । अवभृथ इति कर्मनाम । तेन साङ्गेन प्रचरन्त्युत्थिताः ॥ २० ॥

**तूर्णं प्रहृत्य स्रौवमाघारयति ॥ यदि वा पुरा तूर्णं स्यात्तस्मिञ्जुहुयात् ॥ २१ ॥**

तूर्णस्योपरिष्टात्सर्वहोमाः । "आहुतीनां प्रतिष्ठित्या" इति श्रुतेः । ततः स्रौव एव, नोपवाजनं, इन्धनार्थत्वात् । दशहोत्रादेः समिद्धानुमन्त्रणान्तस्य लोपः । प्रकृतिवदन्यदनर्थलुप्तम् ॥ २१ ॥

॥ इति सप्तमी कण्डिका ॥

**अग्नीदपस्त्रिः संमृड्ढीति संप्रेष्यति ॥ १ ॥**

कृत आप्यायनेऽग्नीदिति प्रैषः । स्फ्येनैव केवलेनोदकं संमार्ष्टि । सन्नहनाभावात् । सम्मार्जनदर्भैर्लौकिकैरित्युपदेशः ॥ १ ॥

**आपो वाजजितो वाजं वः सरिष्यन्तीर्वाजं जेष्यन्तीर्वाजिनीर्वाजजितो वाजजित्यायै संमार्ज्म्यपो अन्नादा अन्नाद्यायेति मन्त्रं सन्नमति ॥ २ ॥**

वाजजित्यादयो गुणा अपां स्युर्न वेति प्राप्त ऊहोपदेशः । भुवनमिति यज्ञाभिधानं भुवनं लोकः स्थानम्, तत् त्वमसीति यज्ञ उच्यते । विविधं प्रथस्वेति यजमानम् । अस्मिन् यज्ञे विप्रथस्वेति यजमानस्य । यज्ञो वै भुवनमिति । अतोऽनूहः । [क]आपो यष्ट्र्य इत्येतावानूहः । अविकृत[1] उपदेशः । देवताग्नेरभिधानात् नाहवनीयस्येति । आक्रमणावस्थानप्रत्याक्रमणानां निवृत्तिरवेदिपक्षे ॥ २ ॥

**अग्नेरनीकमप आविवेशेति स्रुच्यमाघारयति ॥ ३ ॥ वागस्याग्नेयीत्यनुमन्त्रयते यजमानः ॥ ४ ॥**

[ख]प्रति ते जिह्वा घृतमुच्चरण्येत्स्वाहेति मन्त्रान्तः[2] । आग्नेय आघारः । गुणभूता

1 J. Ms. reads अविकारः ।

2 B. Ms. 1 स्वाहेत्याघारमन्त्रान्तः, B. Ms. 2 reads स्वाहेति मन्त्रः, J. Ms. reads स्वाहेत्याधारमन्त्रः ।

क. 'अग्ने यष्टरिदं नमः' इति मन्त्रः । आपो यष्ट्र्य इदं नमः इत्यूहितव्य इति ।

ख. 'अग्नेरनीकमप आविवेश' इति मन्त्रः तै. सं. १. ४५. १ उच्चरण्येदित्यन्तोऽन्ते स्वाहापदघटित इति त्रिष्टुप्छन्दसोऽस्य तावन्मात्रेण परिसमाप्तेः । समुद्रे त ' इत्यादेः कार्यान्तरे विनियुक्तत्वादिति । See आप. श्रौ. १३. २०. १०.

अन्या देवताः ॥ ३, ४ ॥

**लुप्यते प्रवरः ॥ ५ ॥**

[क]अवस्थानादेर्मानुषान्तस्य प्रवरस्य लोपः ॥ ५ ॥

**अपबर्हिषः प्रयाजानिष्ट्वाप्सुमन्तावाज्यभागौ यजति ॥ ६ ॥**

बर्हिर्वर्जाः प्रयाजाः । त्रीनिष्ट्वाऽर्धमौपभृतस्य समानयति यद्यनूयाजौ । सर्वस्येतरथा ॥ ६ ॥

**अप्स्वग्न इत्येषा । अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा। अग्निं च विश्वशंभुवमापश्च विश्वभेषजीरित्यप्सुमन्तौ ॥ ७ ॥**

अप्सुशब्दो ययोस्तावप्सुमन्तौ । [ख]वृषण्वानपि लभ्यते सोमस्य, परिपाठात् । [ग]पुरोनुवाक्यामात्रस्य विकारः ॥ ७ ॥

**निष्कासस्यावदाय वरुणमिष्ट्वा कृत्स्नं निष्कासमवदायाग्नीषोमौ(वरुणौ) स्विष्टकृदर्थे यजति ॥ ८ ॥**

कुम्भीस्थो वारुण्याश्शेषो निष्कासस्तस्यावदानं, [घ]वारुणस्य वा । प्रकृतिवदिष्ट्वा वारुणं नारिष्टहोमाः । कृत्स्नमवदाय वारुणमपि 'अग्नीवरुणाभ्यामनुब्रूहि' अग्नीवरुणौ [ङ]यजेति वाजसनेयमतात् । अग्नीवरुणाभ्यां स्विष्टकृद्भ्यामनुब्रूहि अग्नीवरुणौ स्विष्टकृतौ

---

क. उत्तरतः प्रवरायावतिष्ठते ( आप. श्रौ. २. १५. १ ) इति प्रवरार्थं विहितमवस्थानम् । मानुष इत्युच्चैः ( आप. श्रौ. २. १६. १५ ) इति नामग्रहणविधानम् । तस्य व्यापारस्याऽवस्थानादेर्नामग्रहणान्तस्य लोपः । आदावेव कृतत्वादिति ।

ख. याज्यानुवाक्यापरिपाठक्रमे 'अप्स्वग्ने सधिष्टव' इति पठित्वा अनन्तरं 'वृषा सोम द्युमाँ असि' सौम्याः परिपाठात् सूत्रपठितया 'अप्सु मे सोमो अब्रवीत्' इत्यनया सह 'वृषा सोम' इत्यस्या अपि विकल्पेन प्राप्तिः । वृषशब्दघटितो वृषण्वान् । (See तै. सं ४. १. १४. ४).

ग. ऋच इमाः पुरोनुवाक्यार्थमेव विधीयन्ते । याज्यास्तु प्राकृतावेव मन्त्रौ 'जुषाणो अग्निः जुषाणस्सोमः' इति ।

घ. पुरोडाशस्येति शेषः ।

ङ. See मा. श. ब्रा. ४. ४. १. १७ 'अग्नीवरुणाभ्यामनुब्रूहि' इति तत् स्विष्टकृते अग्नीवरुणौ यजेति वषट्कृते जुहोति P. 377 my edition of Chaukhamba.

यजेति [क]बौधायनमतात्। वरुणस्याहं देवयज्ययाऽन्नादो भूयासं, अग्नीवरुणयोरहं देवयज्ययाऽऽयुष्मान् यज्ञेन प्रतिष्ठां गमेयमिति। नैककपालधर्मः साधारणः, नापि वैशेषिकः पूरणादिः। [ख]'वारुणमलंकृत्ये'ति दर्शनात्। आज्यान्येव चतुर्गृहीतानि न [ग]पृषदाज्यमिति। 'चतुरः प्रयाजान् यजतीति' लिङ्गात्। विशेषधर्मा एवैककपालेषु प्रवर्तन्ते ये बद्धा आग्रयणे। इतरथा तु षट् स्युः प्रतिषेधाद्बर्हिर्विकाराणाम्॥ ८॥

**नोत्तरं क्रियते॥ ९॥**

न [घ]निनयनाद्युत्तरं स्विष्टकृतः॥ ९॥

**अपि वौपभृतं जुह्वामानीयापबर्हिषावनूयाजौ यजति॥ १०॥ देवौ यजेति प्रथमं संप्रेष्यति। यजेत्युत्तरम्॥ ११॥**

अपि वाऽनूयाजावेव बर्हिवर्जौ। तूष्णीं दध्नौदुम्बरशाखया प्रोक्षणं तुषाणाम्। तुषा ऋजीषधर्मं लभन्त इति [ङ]देवतात्वस्याभावात् व्रीहेः यवस्य वेति। केचित्संस्कार इति कुर्वन्ति [1]व्रीहिराजन् यवराजन्नित्यूहयित्वा॥ १०, ११॥

---

1 Except J. Ms. all read यवराजन् व्रीहिराजन्

क. See बौ. श्रौ. ८. २०. P. 260 L. 18. Vol. I. A. S. B.ed. सवैश एव वारुणमवदद्य-दाह-अग्नीवरुणाभ्यां स्विष्टकृद्भ्यामनुब्रूहि, इति......आश्राव्य 'अग्नीषोमौ स्विष्टकृतौ यज' इति।

ख. सौमिकेऽवभृथे वारुणमलंकृत्य (आ. श्रौ. १३ १८ ४.) इति सम्भवत्प्राप्तिकस्याप्यलंकरणस्य पुनर्विधानात् आज्यभागन्यायेन अलङ्करणमेव कर्तव्यम्, न पूरणादयो विशेषधर्मा इति प्रतीयत इति।

ग. श्रुतौ अवभृथप्रकरणे श्रुतस्य 'अपबर्हिषः प्रयाजान् यजति' (तै. सं. ६. ६. ३. २) इति वचनस्यान्यत्र विवरणं क्रियते-चतुरः प्रयाजान् यजति इति। एतेन सिद्धवदनुवादेनेदमवगम्यते-एककपालेष्वन्येष्वपि विशेषधर्माणामेव सर्वहुतं जुहोति' इत्यादीनामेव प्रवृत्तिः, न साधारणधर्माणां नवप्रयाजत्वादीनाम्। इतरथा अपबर्हिष इत्यनेन बर्हिः प्रयाजस्य तद्विकारयोश्चेति त्रयाणामेव षट् प्रयाजा अवशिष्टाः स्युरिति 'चतुर' इत्यनुपपन्नं स्यादिति।

घ. स्विष्टकृतोऽनन्तरं 'जुह्वामप आनीय......अन्तःपरिधि निनयति' इति निनयनं (आप. श्रौ. ३. २१. ७.) विहितम्। तत आरभ्योत्तराङ्गानि न कर्तव्यानीति।

ङ. सौमिकेऽवभृथे यत्ते ग्राव्णाऽऽप्यायस्व सन्त इति......दध्नौदुम्बरशाखयर्जीषं प्रोक्षति (आप. श्रौ. १३ २०. ८) इति मन्त्रेणर्जीषप्रोक्षणं विहितम्। तदत्र तुषेषु यावकेषु व्रैहेयेषु वाऽतिदिष्टं तुषा ऋजीषधर्मं लभन्त (आप. श्रौ. ८. ७. १५) इति वचनात्। तच्च मन्त्रं विनैव कर्तव्यम्। सौमिके ह्यवभृथे ऋजीषप्रोक्षणमन्त्रे 'यत्ते ग्राव्णा' इत्यत्र 'निष्ट्यायतां देव सोम' इति सोमस्य देवतात्वमभ्युपगम्य तदवयवच्छेदनजन्यदोषनिवृत्तिप्रार्थनपूर्वकं तदवयवानां पुनराप्यायनं प्रार्थितम्। अत्र तु तुषप्रकृतिभूतानां व्रीहीणां यवानां वा देवतात्वं नोक्तमिति न तन्मन्त्राणामत्र प्रवृत्तिः।

**तुषाणां स्थालीं पूरयित्वाप्सूपमारयति समुद्रे ते हृदयमप्स्वन्तरिति ॥ १२ ॥**

पश्चात्स्थालीं पूरयति तुषाणाम्। यदाप्येककपालस्तदा निष्कासे [क]ऋजीषधर्माः तुषैश्च निष्कासेन चावभृथमवैतीति। उपमारयति प्रवेशयत्युदकं स्थालीम्। न [1]चोत्पूतभक्षणं[ख] तुषाणाम्, अवचनात्, अस(र)सत्वाच्च ॥ १२ ॥

**अपि वा न सौमिकोऽवभृथः। तूष्णीं तुषनिष्कासमप्सूपवेत् ॥ १३ ॥ इमं विष्यामीति पत्नी योक्त्रपाशं विमुञ्चते ॥ १४ ॥**

असौमिकेऽवभृथे मार्जनकाले तुषनिष्कासस्यैव क्षेपः। योक्त्रविमोकादि सर्वत्र समानम्। प्रतियुतादेः प्रत्यक्षाम्ना(ना)त् असौमिकेऽपि श्रुत्यन्तरविहितं याज्याम्नानात् अस्माकं सौमिकप्रकृतित्वमवभृथानां यत्वनिष्टं तदिहाबद्धम् ॥ १३ ॥ १४ ॥

**देवीराप इत्यवभृथं यजमानोऽभिमन्त्र्य सुमित्रा न आप ओषधय इत्यपः प्रगाह्य सशिरस्कावनुपमक्षन्तौ स्नातः पत्नी यजमानश्च ॥ १५ ॥**

अवभृथ इत्युदकाख्या तस्याभिमन्त्रणं यजमानस्य ब्रूतादित्येवमन्तेन। सुमित्रा न इति स्नानमन्त्रः उभयोरपः प्रविश्य यत्र होमः कृतः सशिरसौ अनुपमक्षन्तौ अशोधयन्तौ मलमतिशुध्द्यर्थम् ॥ १५ ॥

**अन्योऽन्यस्य पृष्ठे प्रधावतः ॥ १६ ॥**

पृष्ठे प्रधावतः परस्परस्य ॥ १६ ॥

---

1. B. Ms. 1. reads उत्पूतस्य.

किन्तु तूष्णीमेव प्रोक्षणमिति। 'व्रीहिराजन्' इत्येव सर्वेष्वेवादर्शपुस्तकेषु पाठ उपलभ्यते। तालवृन्तनिवासिनापि स एव पाठोऽङ्गीकृतः। परं तु कथं तत्र समासान्तष्टच् न प्रवर्तेत इति न ज्ञायते। न च प्रकृतिमन्त्रे 'चिच्छिद्रुत्सोम राजन्' इति श्रवणात् सोमराजन् इत्यस्य स्थाने 'व्रीहिराजन्' इति युक्त ऊह इति सांप्रतम्। तत्र सोमराजन् इति सम्बुद्ध्यन्तपदद्वयरूपत्वेन तथा भवितुं युक्तत्वात्। यथा सोमराजन्नेश्यवरोह (तै. सं. १. ३. १३. १) इति। न चोहितपाठ आर्षप्रयोगो युक्तः इति।

क. निष्कासेन यागाभावेऽपि 'तुषैश्च निष्कासेन चावभृथमवैति' इत्यनेन तुषैस्साकं निष्कासस्याऽवभृथदेशप्रापणविधानात् निष्कासस्यापि तुषवत् ऋजीषधर्मप्राप्तिरिति।

ख. 'भक्षयेद्वाऽप्सु धौतस्य सोमदेवत' इति आप. श्रौ. १३. २०. ११. इति यद्भक्षणं विहितं तत्तुषाणां न भवति। अप्सु धौतस्येति मन्त्रार्थस्य तत्राभावात् रसाभावाच्चेति।

**काममेते वाससी यस्मै कामयेयातां तस्मै दद्याताम् । न हि दीक्षितवसने भवत इति वाजसनेयकम् ॥ १७ ॥**

यस्मै कामयेयातामृत्विजे तस्मै वाससोर्दानम्, कामवचनाददानमपि । '[क]न दीक्षितवसनं परिदधीते'ति दीक्षितवसनस्य परिधानप्रतिषेधः । स इह नास्तीति दीयते । [ख]नूनं श्रुतिनिप्रतिषेधो यतो बन्धनमहतवसनादेः ॥ १७ ॥

**उद्वयं तमसस्परीत्यादित्यमुपस्थाय प्रतियुतो वरुणस्य पाश इत्युदकान्तं प्रत्यसित्वा समिधः कृत्वाप्रतीक्षास्तूष्णीमेत्यैधोऽस्येधिषीमहीत्याहवनीये समिध आधायापो अन्वचारिषमित्युपतिष्ठन्ते ॥ १८ ॥**

आदित्योपस्थानमुभयोः[ग] । उदकस्यान्तः उदकान्तः । तस्य प्रत्यसनं पुनः क्षेपो [घ]यदुत्तरतो वेगाद्बहिर्भवति । समिधः कृत्वा हस्ते ऋत्विजो[1] यजमानौ च । अप्रतीक्षा अनवेक्षमाणा उदकं यत्र यागः कृतः । [ङ]तूष्णीं वाग्यताः । उपस्थानान्ते कृते "अपो अन्वचारिषमि"ति सर्वैरेकस्मिन्नुत्करे उपवेषयोरुद्वासनम् । क्रमेण कपालविमोचनम् । प्राश्य निष्क्रामति ब्रह्मा । उपस्थाय च दक्षिणे उत्तरे विष्णुक्रमादि, अवेदिसंस्कारत्वात्[च] । पर्यायेणोपसमिन्धनमुभयोराहवनीययोः । शेषमुत्तरे विहारे । एकस्यैव वेदस्योपस्थ आधानम् ।

---

1. B. Ms. 2 and Ad. ऋत्विजौ यजमानौ च. B. Ms. 1. ऋत्विजो यजमानश्च ।

क. 'न हि दीक्षिते' त्यादिसूत्रांशस्यायमर्थः—सोमे दीक्षिताभ्यां पत्नीयजमानाभ्यां ये परिहिते दीक्षाकाले वाससी ते अन्येन न परिधातव्ये इत्यस्ति निषेधो न हि दीक्षितवसनमित्यादिः । इमे तु दीक्षितवसने न भवतः । अत्र दीक्षाया अभावात् । यस्मादिमे दीक्षितवसने न भवतः तस्माद्दानार्हे एवेति ।

ख. 'अथाऽस्मै क्षौममहतं महद्वासः प्रयच्छति' (१०, ६, ४) इति यद्विहितं वासः तस्यैव परिधानप्रतिषेधः श्रुत्या क्रियते 'न दीक्षिते'ति । अनयोस्तु न प्रतिषेधोऽविहितत्वादिति ।

ग. पत्नीयजमानयोः ।

घ. उत्तरतः उत्तरणं कुर्वतः, जलात्तीरदेशं प्राप्नुवतः । जलात् तीरदेशं प्रति वेगादागमनसमये उदकं यत् स्वस्थानात् बहिर्निस्सृतं तस्य पुनः प्रतिनिवर्तनं प्रत्यसनम् ।

ङ. तूष्णीमिति 'अपाम सोममित्यादि मन्त्रनिवृत्तिपरं न भवति । तस्येष्ट्यनङ्गत्वादेवाऽप्राप्तेः । अतो वाग्यमनविधानार्थमेव सौमिकधर्मप्राप्तिपक्षेपीति ।

च. सुवर्गाय हि लोकाय विष्णुक्रमाः क्रम्यन्ते (तै. सं. १. ७. ६. १) इत्यादिना विष्णुक्रमस्य यजमानार्थत्वावगतेः वेदिसंस्कारत्वाभावात् न प्रत्येकं वेद्योर्विष्णुक्रमणम् । किन्तूत्तरस्यामेव सकृदिति ।

यजमानसंस्कारत्वात् । उपदेश [क]उभौ वेदौ । युगपद्यजमानभागप्राशनमामिक्षयोः । विमोकादि तर्पणान्तमित्युपदेशः । पुरस्ताद्यज्ञशंचमात् अवभृथः । विमुक्तत्वाद्यज्ञस्य । अन्यन्वाधानवर्जं सर्वमनर्थलुप्तं क्रियते । कृतेऽवभृथे समिदाधानाद्युपस्थानान्ते च निष्क्रान्ते ब्रह्मणि यज्ञशंचमादि ब्राह्मणभोजनान्तम् । केचिद् वृष्टयन्तेऽवभृथं कुर्वन्ति । तेषां पुनस्सर्वं विहरणादि ॥ १८ ॥

**अत्र पौर्णमास्येष्ट्वोन्दनादि पूर्ववन्निवर्तनम् ॥ सर्वं वा वापयेत् ॥ १९ ॥**

अत्र अस्मिन् वरुणप्रघासस्थाने पौर्णमास्या यागः उन्दनादि उन्दनप्रभृति पूर्ववद्वापनं शिरसः केशानां निवर्तनं वा ॥ १९ ॥

**मन्त्रादिर्विक्रियते । यद्धर्मः पर्यवर्तयदन्तान्पृथिव्या दिवः । अग्निरीशान ओजसा वरुणो धीतिभिः सह । इन्द्रो मरुद्भिः सखिभिः सह ॥ अग्निस्तिग्मेनेति समानम् ॥ २० ॥ अपि वा स्नात्वोप्त्वा केशश्मश्रूण्यरण्योरग्नीन्समारोप्योदवसाय निर्मथ्य पौर्णमासेन यजते ॥ २१ ॥**

अपि वा स्नात्वावभृथे(थं) परिसमाप्य वरुणप्रघासान् वपनमुन्दनादि । अरण्योर्द्वयोर्द्वयोरग्नीन्समारोप्य धार्यान् । केचित् द्वयोरेव समारोपणमिच्छन्ति सर्वेषाम् । उदवसाय पुनरग्न्यगारं गत्वा निर्मन्थ्य पौर्णमासयागः । [ख]पुनर्वचनाद्वपनं मन्थनविधिश्चेह नित्यः । उपदेशः प्रदर्शनार्थ इति ॥ २० ॥ २१ ॥

**यज्ञो ह वा एष यद्वरुणप्रघासा न ह्यवकल्पते यदुत्तरवेद्यामग्निहोत्रं जुहुयादिति वाजसनेयकम् ॥ २२ ॥**

यज्ञो[1] ह व एष यद्वरुणप्रघासाः अवभृथदर्शनात् । उदकाभ्यवायश्च[2] केषां

---

1. Ad. Ms. reads यज्ञ एषः
2. J. Ms. reads उदकावभृथश्च

क. कृतकार्ययोर्वेदयोः प्रतिपत्तिसापेक्षत्वात् पत्न्युपस्थप्रासनवदुभयोरपि तदौचित्यात् इत्युपदेश इति ।

ख. सूत्रे ..उप्त्वा केशश्मश्रूणि......निर्मन्थ्य इति वपनमन्थनयोः पुनर्विधानात्तदुभयं नित्यम् । न केशनिवर्तनारमसमारोपणाभ्यां विकल्प्यते द्वयमिति ॥

-चित्प्रतिषिद्धः। न च तत्राग्निहोत्रं हूयते सोमे। [क]इहाप्येवं नावकल्पते। न [ख]सुरुचितं यदुत्तरवेद्यामग्निहोत्रं हूयते। तस्मान्न होतव्यमिति निन्द्यते वाजसनेयके। आप्येभ्यो निनीयाग्नी प्रणयतः। न तत्र ह्युत्तरवेद्यां अग्निहोत्रं हूयत इत्यस्य विधेः प्रशंसार्था निन्दा। सद्यस्कालता वा प्रशस्यते। तत्राऽपि न हूयते उत्तरवेद्यामग्निहोत्रमित्येवमर्थं वा ॥

इत्यष्टमी कण्डिका ॥

इति धूर्तस्वामिविरचिते आपस्तम्बश्रौतसूत्रभाष्येऽष्टमप्रश्ने द्वितीयः पटलः समाप्तः॥

---

क. इहापि यथा प्रयोगमध्येऽग्निहोत्रानुष्ठानं नापतेत्तथाऽवकल्पनीयं सोमयागावैषम्यात्।

ख. सुरुचितं समीचीनप्रयोगः।

# तृतीयः पटलः

**ततश्चतुर्षु मासेषु पूर्वस्मिन्पर्वण्युपक्रम्य त्र्यहं साकमेधैर्यजते ॥ १ ॥**

[क]पुनर्माসचतुष्टयविधेर्यत्राधिकमासस्तत्राऽऽरम्भो नेष्यते चातुर्मास्यानाम् । इह पूर्वं पर्व चतुर्दशी । साकमेधेषु [ख]पञ्चदशी महाहविषः । चतुर्दश्यां शुनासीरीयेणेष्ट्वा पञ्चदश्यां वैश्वदेवेनेति पञ्चदशी वैश्वदेवकालः । पूर्वं तु पर्व चतुर्दशी । तत्र पञ्चहोताऽन्वारम्भणीया चेति सिद्धं त्र्यहविधानं त्र्यहविधानप्रतिषेधार्थं [ग]महाहविषोऽप्युत्तरेण विहारेण कल्प इति त्र्यहकालत्वमपि स्यादिति तत्प्रतिषिध्यते ॥ १ ॥

**अग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति साकं सूर्येणोद्यता ॥ २ ॥**

साकं सहेत्यर्थः । [घ]सह वर्धनं यस्मात्सोमस्य छन्दसां चास्मिन्कर्मणि अतः साकमेधाः । साकं सह सूर्योदयेन निर्वापो यागे ॥ २ ॥

**साकं वा रश्मिभिः प्रचरन्ति । सिद्धमिष्टिः सन्तिष्ठते ॥ ३ ॥**

उद्यद्भिः रश्मिभिः सह । यजत्यर्थत्वान्निर्वपतेः । अग्नयेऽनीकवते अग्नेऽनीकवन्, अग्निमनीकवन्तम्, अग्नयेऽनीकवते, अग्निरनीकवान्, इद ( अह )मन्नादो भूयासम् ॥ ३ ॥

**मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुम् ॥ ४ ॥**

---

क. पूर्वं मध्येऽधिकमाससंभवेऽनारम्भात्तत्पक्ष उक्तः । इदानीं संवत्सरे यत्र क्वापि अधिकमाससंभवेऽनारम्भ उच्यते ।

ख. अथ पुनरालभमानस्य फाल्गुन्याश्चतुर्दश्यां शुनासीरीयेणेष्ट्वा पञ्चदश्यां वैश्वदेवेन यजेत ( आप. श्रौ. ८. २१. ६ ) इति पुनश्चातुर्मास्यारम्भकालविधौ वैश्वदेवस्य पञ्चदशीरूपः काल उक्तः । महाहविश्च तत्प्रकृतिकम् । अतस्तत्रापि स एव कालः प्राप्नोतीति ।

ग. त्र्यहशङ्काकारणमिदं-महाहविषोऽपि...तस्य वारुणप्रघासिकेनोत्तरेण विहारेण कल्पो व्याख्यातः (आप. श्रौ. ८. १२. २ ) इति वारुणप्रघासिकोत्तरे वेदितन्त्रातिदेशात् तत्रत्या त्र्यहकालतापि प्राप्नुयात् । अतश्च चतुर्दश्या पूर्वेण पर्वणा मिलित्वा त्र्यहकालत्वमिति ।

घ. सोमश्च राजा छन्दाँसि च समैधन्त तत्साकमेधानां साकमेधत्वम् (तै.ब्रा. १-४-१०-१२.)इति श्रुतेरनुकृतिरियम् । See तै.सं. १.७.४.१. and तै. ब्रा. १.६.६.२. इति श्रुतौ साकमेधशब्दनिर्वचनादिति ।

मध्यन्दिने निर्वपतीति निर्वापो यागो वा ॥ ४ ॥

**न बर्हिरनुप्रहरति । सिद्धमिष्टिः सन्तिष्ठते ॥ ५ ॥**

यदा [क]सान्तपनीयस्य बर्हिर्गृहमेधीयस्य तदा न बर्हिषः प्रहरणम् । समिष्टयजुस्तु हूयते । प्रह्रियते च प्रस्तरस्सूक्तवाके । यदा [ख]त्वबर्हिःपक्षो गृहमेधीये तदा तु प्रह्रियते बर्हिः । मरुद्भ्यः सान्तपनेभ्यः, सान्तपना मरुतः, मरुतस्सान्तपनान्, सान्तपनानां मरुताम्, मरुतस्सन्तपना इदं हविः ॥ ५ ॥

**मरुद्भ्यो गृहमेधिभ्यस्सर्वासां दुग्धे सायं चरुम् ॥ ६ ॥ यत्सान्तपनस्य बर्हिः तद् गृहमेधीयस्य ॥ ७ ॥**

सर्वासां यजमानगवां दुग्धे गृहमेधीयः । यदा बर्हिःपक्षस्तदा गृहमेधीयो ब्राह्मणतर्पणान्तः । एतावांस्तु विशेषः प्रातर्दोहधर्मेण वा संस्कृते पयसि श्रपणं चरोः । अर्धमेके वेति । सूत्रकारस्तु [ग]अबर्हिःपक्षं संस्कृतवच्च पयोऽनुक्रामति ॥ ६ ॥

**[घ]अपि वा नेध्माबर्हिर्भवति । न सामिधेनीरन्वाह न प्रयाजा इज्यन्ते । नानूयाजाः ॥ ८ ॥**

अपि वेति वचनात्पूर्वस्मिन्विधौ यथाप्रकृत्येव संस्था प्रकृतिवाच्ये( वचे )ध्माबर्हिरनुमीयते । अबर्हिःपक्षे सामिधेनीनां प्रतिषेधोऽनुवादः । ब्राह्मणेऽभिहितत्वात् ॥ ८ ॥

**अयजुष्केण वत्सानपाकृत्यापवित्रेण गा दोहयति ॥ ९ ॥**

अयजुष्केण मन्त्रवर्जितेन । लौकिकेनोपायेन वत्सापाकरणम् । अपवित्रे कपालधर्मिणि [ङ]चरौ गा दोहयत्यध्वर्युः दोग्धारम् । प्रणीतावत्पश्चात् पवित्राभ्यामुत्पुनाति क्षीरं " देवस्त्वा सवितोत्पुनात्वि "ति । प्रणीताधर्मेण वा प्रणीते पयसि श्रपणम् । सर्वत्रैवं घृतादिषु नपुंसकेषु । केचित्त्वाहुः शाखयैवापाकरणं मन्त्रवर्जितया । तस्यां च पवित्रवत्यां दोहनमिति ॥९॥

---

क. यत्सान्तपनस्य बर्हिस्तद् गृहमेधीयस्येत्युत्तरत्र वक्ष्यति । तत्पक्षे गृहमेधीयार्थं बर्हिषां धारणस्यावश्यकत्वात् सान्तपनीये न बर्हिःप्रहरणमिति ।

ख. अपि वा नेध्माबर्हिर्भवति ( आप. श्रौ. ८. ९. ५ ) इति पक्षे ।

ग. अत्र गृहमेधीये बर्हिःपक्षोऽबर्हिःपक्षः ( See आप. श्रौ. ८. ९. ७. ८. ) एवं पयसस्सधर्मकत्वमधर्मकत्वं च । तत्र बर्हिःपक्षं पयसा सधर्मकत्वपक्षं चाङ्गीकृत्यैव सूत्रकारो वदति-स वै खलु पर्णशाखया' इत्यादीति ।

घ. सूत्रे नेध्माबर्हिरित्यादिः श्रुतेरनुवादः । ( See तै. ब्रा. १. ६. ६. ५. )

ङ. चरुशब्द इह स्थालीवाचकः ।

**स वै खलु पर्णशाखया वत्सानपाकृत्य पवित्रवति सन्दोह्य यथैतदमावास्यायां क्रियते तं चरुं श्रपयतीत्येके ॥ १० ॥**

स वै खल्विति ब्राह्मणम्। [क]पर्णशाखा च नित्या पवित्रवति लज्ञितशाखावति चरौ सन्दोहनम्। यथैतत्पयोऽमावास्यायां क्रियते तथा संस्कृते पयसि तं गृहमेधीयं चरुं श्रपयति। तमेव पक्षं पठति सूत्रकारः ॥ १० ॥

**अग्नीनन्वाधाय वेदं कृत्वाग्नीन्परिस्तीर्य पाणिप्रक्षालनादि कर्म प्रतिपद्यते। यथार्थं पात्राणि प्रयुनक्ति। स्थालीं कपालानां स्थाने। निर्वपणकाले ॥ ११ ॥**

अग्नीनन्वाधाय शाखाछेदनम्। परिस्तरणादि वेदः पलाशप्रशातनादि अलङ्करणान्ते निधानं पवित्रस्य, [ख]परिस्तरणादिविधानात् पौर्णमासतन्त्रत्वम्। अग्नीषोमीयविकाराः सगुणा[ग] मरुतः। वेदानन्तरं परिस्तरणादिविधानात्। ऐन्द्राग्नविकारे तु वेदानन्तरं वेदिः स्यात्। अपरतो दृषदुपलावर्जम्। पुरतः प्राशित्रहरणप्रणीताप्रणयनान्वाहार्यश्रमवर्जम्। कुम्भीवर्जानि च यानि प्रातर्दोहपात्राणि। असंस्कारपक्षे चरुतन्त्रवत्। पवित्रकरणादि प्रकृतिवत् [घ]पुनः कपालस्थानविधानात्। कुम्भीस्थानेन स्थाली सत्यप्युभयधर्मवत्वे ॥

इति नवमी कण्डिका ॥

**चतुरो मुष्टीन्निरुप्य बह्वन्वावपति ॥ १ ॥**

[ङ]अन्वावापोऽमात्यब्राह्मणपरिमाणः ॥ १ ॥

**कपालानामुपधानकाले प्रथमेन कपालमन्त्रेण चरुमुपदधाति। ध्रुवोऽसीति मन्त्रं संनमति। पिष्टानामुत्पवनकाले तण्डुलानुत्पुनाति।**

---

क. सपवित्रशाखया वत्सापाकरणं कृत्वा तद्वत्यां स्थाल्यां मन्त्रवद्दोहनम्।

ख. वेदं कृत्वाऽग्नीन्परिस्तीर्य वेदकरणानन्तरं परिस्तरणनियमात् पौर्णमासतन्त्रप्राप्तिमत्र दर्शयति सूत्रकार इति। अमावास्यातन्त्रत्वे वेदानन्तरं वेदिः प्राप्नुयादिति।

ग. सान्तपनगुणविशिष्टानां मरुतां त्र्यधिकाक्षरत्वादग्नीषोमीयविकारत्वं गृहमेधीयस्येति।

घ. चरुश्रपणार्थत्वात्स्थाल्यां प्राप्तायामपि पुनः "स्थालीं कपालस्थाने" इति वचनं स्थाल्यास्सत्यपि पयोधारणार्थत्वे तत्र कपालधर्मा एव प्राप्नुयुः न कुम्भीधर्मा इत्येतदर्थमिति।

ङ. समन्त्रकचतुर्मुष्टिनिर्वापानन्तरं पुनरपि निर्वापः अन्वावापः। See for अन्वावाप आप. श्रौ. १. १८. २. अमात्या गृहवर्तिनो जनाः। तेषां भोजनपर्याप्तं द्रव्यमन्वावापयेदिति।

**अधिश्रयणकाले प्रातर्दोहवत्सर्वा यजमानस्य गा दोहयित्वा तस्मिञ्छ्रपयति ॥ २ ॥**

पुनश्चरुधर्मचलीयस्त्वार्थमनुक्रमणम्[क] । अधिश्रयणकाले "एता आचरन्ति" [1]इत्यादि संक्षालननिनयनान्तम् । उपवेषमादाय "भृगूणामङ्गिरसामि"त्येतत्, अधिश्रितत्वात् संक्षालनमानीय अधिश्रयणादिचरुधर्माः । असंस्कारे चरुधर्म एवोपदेशः ॥ २ ॥

**संप्रैषकाले यदन्यदिध्माबर्हिषस्तत्संप्रेष्यति । आज्यग्रहणकाले ध्रुवायामेव गृह्णाति ॥ ३ ॥**

[ख]नियतस्संप्रैषः ॥ ३ ॥

**प्रोक्षणीरभिमन्त्र्य ब्रह्माणमामन्त्र्य वेदिं प्रोक्ष्य प्रोक्षणीशेषं निनीय पवित्रे अपिसृज्यान्तर्वेदि विधृती निधाय ध्रुवां स्रुवं च सादयति ॥ ४ ॥**

[ग]अभावाद्बर्हिषः "वेदिरसि स्वाहे"ति प्रोक्षणम् । [घ]प्रकृतिवदुपदेशः । वेद्यां [ङ]मन्त्रेण पवित्रापिसर्गः । [च]नाभिमन्त्रणं सूर्यस्त्वेति । परिध्यङ्गत्वात् केचिद्वदन्ति अग्नित्वकल्पनं च । [छ]यावदुक्तं कर्मोपदेशः ।

---

1 Ad reads इत्येवमादि

क. "कपालानामुपधानकाल" इत्याद्यनुक्रमणम् ।

ख. प्रकृतौ संप्रैषस्तदभावो वेति पक्षद्वयमुक्तम् (See आप. श्रौ. २. ३. ११. १४.) तेन विकल्पः सिध्यति। सोऽत्र माभूत्। किन्तु नियमेन संप्रैषः कार्यः। यतः सूत्रकारेणात्र अबर्हिःपक्षमाश्रित्यैव धर्माणामुपदेशात्। तस्मिन्पक्षे इध्माबर्हिरुपसादय इति प्रैषस्य प्राप्त्यभावात्...यदन्यदिध्माबर्हिष इति स्ववचनं स्ववैयर्थ्यपरिहारार्थं संप्रेषणैयत्यमवबोधयतीति ।

ग. प्रकृतौ वेदिरसि बर्हिषे त्वा इति वेदिप्रोक्षणमन्त्रः । अत्र बर्हिषोऽभावात् तद्वाचकबर्हिःपदं परित्यज्य मन्त्रः पठनीय इति ॥

घ. "वेदिरसी"ति त्रिर्वेदिं प्रोक्षतीति प्रोक्षणस्य वेद्यर्थत्वावगमेन बर्हिःपदस्याऽसमवेतार्थत्वादनूह्यैव मन्त्रप्रयोग इति ॥

ङ. प्रस्तराभावात् तत्स्मरणदेश एव पवित्रापिसर्ग इति ।

च. 'सूर्यस्त्वा' इत्यभिमन्त्रस्य परिध्यर्थत्वात् इध्माभावे परिधीनामप्यभावान्नाभिमन्त्रणम् । केचित्तु 'आहवनीयमभिमन्त्र्य' इत्याहवनीयार्थत्वावगतेः परिध्यभावेऽप्याहवनीयसत्वात् तदर्थमभिमन्त्रणं कुर्वन्ति । होमाधारकल्पकत्वादग्निकल्पनं च कुर्वन्तीति ।

छ. गृहमेधीयस्याऽपूर्वकर्मत्वात् नातिदेशतः पदार्थाः प्राप्नुयुः । अतः तत्सन्निधिपठितानामेवाङ्गानामनुष्ठानमिति ।

**एतावसदतामिति मन्त्रं संनमति ॥ ५ ॥**

विष्णवसि वैष्णवमसीत्यभिमन्त्रणम् ॥ ५ ॥

**उद्वासनकाले शरं निधाय यावन्तो यजमानस्यामात्यास्तावत ओदनानुद्धरति ॥ ६ ॥**

सूर्यो ज्योतिरित्यभिमन्त्र्य उद्वास्य चरुम् । [क]अग्रं शरः । तस्य निधानं [ख]उदायुव-नेनोद्धरणं उत्तरत्र विधानात् । चटुकाकृतिदर्व्या घट्टयति । अस्त्रीका अमात्या इह, अना-म्नानात् । यत्पत्नी गृहमेधीयस्याश्नीयादिति वा पत्न्याः प्रतिषेधादिहापि सस्त्रीकाः स्युः । तत्र तु प्रतिपुरुषवचनात् न स्यात् स्त्रीणाम् । ओ(अतो) विधानम् ॥ ६ ॥

**अतो भूयसो यदि बहुरोदनो भवति ॥ ७ ॥**

अमात्येभ्योऽपि बहव उद्ध्रियन्ते यद्योदनभूयस्त्वं, स्थाप्यते च शेषः स्थाल्याम् । प्राश्नन्ति ब्राह्मणा ओदनं स्थाल्यामिति ॥ ७ ॥

**उध्दृतानुत्पूतानलंकृतानभिघारितानासादयति ॥ ८ ॥**

[ग]उत्पवनं तूष्णीं दर्भाभ्याम् । अलङ्करणं [घ]मन्त्रेणाभिघारणं पुनस्तूष्णीम् ॥ ८ ॥

**दक्षिणाग्नौ पत्न्याः प्रतिवेशमोदनं पचति ॥ तं नाभिघारयति ॥ ९ ॥**

[ङ]प्रतिवेशः पत्न्या अर्थे । प्रतिवेशशब्दचोदितमोदनं दक्षिणाग्नौ पचति । तत्र हि पच्यमानो गृहमेधीयस्य भवति प्रतिवेशः ॥ ९ ॥

---

क. फेनमिश्रश्चरोरग्रिमोऽशश्शरः इति रुद्रदत्तः ॥ See Page 52. Vol. II. A. S. B. पक्व-चरोरुपरि यः फेननिचयः ( स शरः ) इति रामग्निचित् ।

ख. दर्व्या योऽग्रिमो भागो विस्तीर्णः स उदायुवनम् । पच्यमान ओदनो येन दर्वीप्रदेशेन पाकपात्रस्या-धस्ताद्ध्रियमान ऊर्ध्वं समन्ताच्च पूयते मिश्रीक्रियत इति महादेवः । See Page 472 सत्या. श्रौ. Vol. II. An. ed. भाष्यकारस्तु द्वन्द्वसमासाङ्गीकारेण वस्तुद्वयमङ्गीकरोति See भाष्य on सूत्र ८-११-१४.

ग. प्रकृतावस्थाभावेनाप्राकृतत्वादत्र मन्त्राप्रवृत्तिः । घ. 'देवस्त्वा सविता मध्वाऽनक्तु' इति मन्त्रः ।

ङ. गृहस्य यदग्रतो गृहान्तरं स प्रतिवेशः । तत्सादृश्यात् गार्हपत्यस्य च दक्षिणा प्रवेशः प्रतिवेशः । तात्स्थ्याच्च तत्र पच्यमान ओदनो गृहमेधीयस्य प्रतिवेश इत्युच्यते इति रुद्रदत्तः See Page 53. Vol. II A. S. B. ed. प्रतिवेशशब्दोऽनन्तरगृहेषु मुख्यः । समीपलक्षणया तद्योगादन्यत्र वृत्तिः । इति रामाग्निचित् ।

**द्वयोरुद्धरणं वाजसनेयिनः समामनन्ति । दक्षिणादेव मरुतो गृहमेधिनो यजति ॥ १० ॥**

द्वयोरुद्धरणे पूर्वे आज्यभागौ दक्षिणात्, द्वितीय उत्तरस्मादिति, [क]वाजसनेयिमतात् । उपदेशो [1]दक्षिणस्मादेवाज्यभागौ ॥ १० ॥

इति दशमी कण्डिका ॥

**उत्तरस्मात्स्विष्टकृतम् ॥ १ ॥ ओदनयोर्निम्ने कृत्वा तत्राज्यमानीय तत आज्यार्थान्कुरुत आज्यस्थाल्या वेति वाजसनेयकम् ॥ २ ॥ एवं कुर्वन्न ध्रुवायां गृह्णीयात् ॥ ३ ॥**

निम्ने [2]अवटौ कृत्वाऽऽज्यमानयति तूष्णीं यावतार्थस्सिध्यति । न चाप्यायनं चर्वोः । आज्यस्थाल्या वा आज्यार्थाः । आसाद्याऽनूहेन प्रियेणेति । 'अयं यज्ञो ममाग्ने' इत्यभिमृष्टे वेदसादनादि होतृषदनान्तम् । तत उपवाजिनं वेदेन । लोपोऽग्निसंमार्गस्य । सम्मार्गस्य सन्नहनसाध्यत्वात् । यदा चोभयसाध्यः स्फ्येनैव [3]अग्नीदग्निं त्रिस्सम्मृड्ढि इति[4] [ख]संप्रैषः । ततः प्रवरो विना [ग]तृणेन संहननेन च ॥ ३ ॥

**आज्यभागाभ्यां प्रचर्य जुह्वामुपस्तीर्य सर्वतः समवदाय मरुतो गृहमेधिनो यजति ॥ ४ ॥**

तत आज्यभागौ । उपदेशो होतृषदनकल्पनादूर्ध्वमाज्यभागावेवेति ॥ ४ ॥

**सर्वेषामुत्तरार्धात्सकृत्सकृदवदायाग्निं स्विष्टकृतम् ॥ ५ ॥**

---

1 B. Ms. 1 reads दक्षिणादेव J. Ms. प्रथमादेव.

2 J. Ms. reads अवटे.

3 B. Ms. 1 reads अग्नीदग्नीन्, Ad. Ms. reads अग्निमग्नीत् ।

4 B. Ms. 1 reads इति च प्रैषः, B. Ms. 2 reads इति प्रैषः ।

क. श्रपयित्वाऽभिघार्योद्वास्य शरावयोरुद्धरति पात्र्योर्वा । आज्यभागाभ्यां चरत्याग्नेयं दक्षिणात् सोममुत्तरात् (कात्या श्रौ. ५-६-१६) इति कातीयसूत्रम् । अथ द्वे पिशीले वा पात्र्यौ वा निर्णेनिजति । तयोरेनं द्वेधोद्धरन्ति । तयोर्मध्ये सर्पिरासेचने कृत्वा सर्पिरासिञ्चति । "आग्नेयमाज्यभागं सदक्षिणस्यौदनस्य सर्पिरासेचनात्" "सौम्यमाज्यभागं स उत्तरस्यौदनस्य सर्पिरासेचनात्" इति शतपथब्राह्मणम् ( मा. श. २४. ४. ६-८ ) चात्रानुसन्धेये ।

ख. सम्मार्गपक्षे परिध्यभावात् तद्वाचकपदस्य लोप इति । ग. बर्हिरभावात् तृणाभाव इति ।

इष्ट्वा गृहमेधिनः स्विष्टकृत् । न नारिष्ठाः, अननुक्रमणात्, [क]अङ्गानां च परिसंख्यानादाज्यभागौ यजतीति । मरुद्भ्यो गृहमेधिभ्यः, मरुतः गृहमेधिनः, मरुतां गृहमेधिनामहं वृत्रहा भूयासं, मरुतो गृहमेधिन [ख]इदम् ॥ ५ ॥

**न प्राशित्रं न यजमानभागम् ॥ इडान्तः संतिष्ठते ॥ ६ ॥**

इडान्तपक्ष एव प्राशित्रयजमानभागप्रतिषेधः । [ग]अर्वागिडाया ग्रहणमिति गृह्यते ॥ ६ ॥

**ये यजमानस्यामात्या हविरुच्छिष्टाशास्त ओदनशेषान्प्राश्नन्ति । ऋत्विजोऽन्ये वा ब्राह्मणाः ॥ प्राश्नन्ति ब्राह्मणा ओदनं यः स्थाल्याम् ॥ ७ ॥**

मार्जनान्ते यजमानस्यामात्याः स्थानोदनानश्नन्ति । हविरुच्छिष्टमाशो येषां ते [घ]हविरुच्छिष्टाशाः । नान्यदश्नन्ति ओदनशेषात् । कृते मार्जने यदाऽपि द्वयोरुद्धरणं ऋत्विजां नान्यनिवृत्तिः । अशनविधिस्तेषामन्येषाञ्च ब्राह्मणानां यदा भूयांस उद्धृताः । इतरथा तु स्थालीगतस्याशनमृत्विजां अन्येषां च ब्राह्मणानाम् ॥ ७ ॥

**सुहिता एतां रात्रिं वसन्ति प्रतीता अनवर्तिमुखिनः ॥ ८ ॥**

सुहितास्सुतृप्ताः । एतां रात्रिं गृहमेधीयो यस्यामित्यध्याहारः । प्रतीतास्तुष्टाः । अनवर्तिमुखिनः अवर्तिर्दारिद्र्यं तदेषां मुखे न भवति । दरिद्राणां हि भोजनकथाः प्रियाः । ता एषामतितृप्तानां न भवन्ति [ङ]यथा न रोचन्ते तथा कार्याः ॥ ८ ॥

**प्रतिवेशा अपि पचन्ते ॥ ९ ॥**

प्रतिवेशा अपि पचन्ते यजमानव्रतनिर्वापकाः ॥ ९ ॥

---

क. इदं च पूर्वमीमांसायां १०-७-९ अधिकरणे निर्णीतम् । अयमाशयः—गृहमेधीयेष्टिप्रकरणे प्रकृतितोऽतिदेशतस्सम्भवत्प्राप्तिकानामपि आज्यभागस्विष्टकृदादीनां केषाञ्चिदङ्गानां पुनः पाठात् तैरेव गृहमेधीयोपकारस्सम्पादनीयो नाङ्गान्तरानुष्ठानम् । अन्यथा पुनः पाठो व्यर्थःस्यात् । अतश्च न सामिधेनीरन्वाहेत्यादयो निषेधसरूपा न्यायप्राप्तानुवादा एव इति ।

ख. हविरजुषन्त इत्यादिः ।

ग. इडाग्रहणात्पूर्वमेव प्राशित्रयजमानभागयोः ग्रहणं प्राप्तं, तथापि इडाभक्षणानन्तरमेव यजमानभागप्राशनविधानात् इडान्तसंस्थाने उत्तरत्र कालाभावात् प्राशनाभावेन तत्प्रयोजनकमवदानमेव पूर्वं निवर्तेत इति । प्राशित्रस्य तु वाचनिकः प्रतिषेधः ।

घ. हविरुच्छिष्टाशाः वैश्वदेवशिष्टाशिनः यजमानभाण्डोपजीविनः पुत्रपौत्रादय इति रुद्रदत्तः ।

ङ. यथा भोजनेच्छा नावशिष्यते तथा कार्या इति ।

**गा अभिघ्नते ॥ १० ॥**

गोघातश्च क्रियते मांसार्थम् । न चामात्यानामन्याशनस्य निवृत्तिः । अपर्याप्तत्वाच्छेषाशनस्य । गृहमेधीयेनेष्ट्वा आशिता भवन्ति इत्यविशेषेण सामात्यानामुक्तम् ॥ १० ॥

**आञ्जतेऽभ्यञ्जते ॥ ११ ॥**

सर्वमञ्जनमक्ष्णोः । अभ्यञ्जनं पादयोः । न हि भुक्तवन्तो लोकेऽभ्यञ्जते ॥ ११ ॥

**अनु वत्सान्वासयन्ति ॥ १२ ॥**

अनुवास्यन्ते मातृभिस्सह वत्साः पानाय प्रातः ॥ १२ ॥

**अनिष्कासितां स्थालीं निदधाति ॥ १३ ॥**

अनिष्कासितां शेषो यस्या नापनीयते लग्नः ॥ १३ ॥

**अप्रमृष्टं दर्व्युदायुवनमन्ववदधाति ॥ १४ ॥**

दर्वी च उदायुवनञ्च दर्व्युदायुवनम् । [क]एकस्मिन्प्रदेशे दर्वी । एकस्मिन् चटुकाकृतिः । व्युते वा भवतः । तयोरपि लेपनमपनीय स्थापनं स्थाल्यां दर्व्युदायुवनं अन्ववदधाति ॥ १४ ॥

**पराचीनरात्रेऽभिवान्याया अग्निहोत्र्यै च वत्सौ बध्नाति ॥१५॥**

पराचीनरात्रमर्धरात्रात् परतः । अभिवान्या मृतवत्सा या अन्येन दुह्यते । तस्या वत्सं बध्नाति, अग्निहोत्रीवत्सञ्च यदि पयसा होमः । [ख]अन्ये च धयन्ति ॥ १५ ॥

**व्युष्टायां पुराऽग्निहोत्रात्पूर्णदर्व्येण चरन्ति । हुते वा ॥ १६ ॥**

व्युष्टायां प्रभातायां [1]पुराऽग्निहोत्रात्पूर्वमग्निहोत्रहोमात् [2]पूर्णदर्व्यमिति[ग] कर्मनाम । [3]हुते वाग्निहोत्रे ॥ १६ ॥

---

1 B. Ms. 1 reads पुरा पूर्वं अग्निहोत्रात्, अग्निहोत्रहोमात् । 2 रुद्रदत्त reads पौर्णदर्व्यम्.

3 B. Ms. reads कृते चाग्निहोत्रे B. Ms. 2 reads हुतेऽग्निहोत्रे.

क. एकमेवपात्रमेकस्मिन् प्रदेशे दर्वीरूप( गर्तविशिष्ट )मपरस्मिन् प्रदेशे उदायुवनरूपं ( तलविशिष्टं ) भवेदिति । अथ द्वे अपि पात्रे पृथक् पृथक् भवेतामिति । रुद्रदत्तस्तु दर्व्या उदायुवनम् दर्व्युदायुवनम् । येन प्रदेशेन तण्डुलाः पक्तिसाम्यार्थं विक्लिद्यमाना उदायूयन्ते, सर्वं दर्व्यन्तमित्यर्थं इति कथयति ।

ख. अभिवान्या वत्सस्य, अग्निहोत्रीवत्सस्यैव च स्वस्वमातृतः पृथक् बन्धनं प्रातः पितृयज्ञीयहविर्दोहनार्थम् । इतरे च यथेच्छं स्वमातृसमीप एव स्थित्वा स्तन्यं पिबेयुरिति ।

ग. 'पूर्णा दर्वि परापत' इति मन्त्रेण क्रियमाणं होमाख्यं कर्म पौर्णदर्व्यम् ।

**शरनिष्कासस्य दर्वीं पूरयित्वर्षभमाहूय तस्य रवते पूर्णा दर्वि परा पतेत्यनुद्रुत्योत्तरया गार्हपत्ये जुहुयात्॥ यद्यृषभो न रूयाद्ब्रह्मा ब्रूयाज्जुहुधीति॥ १७॥**

उदायुवननिष्कासस्य स्थाल्याश्च पूर्यते दर्वी। ऋषभः सेचनसमर्थः। स आहूयते येनाऽऽगच्छति नाम्ना। नाहवनीयप्रणयनम्, अर्थाभावात्। एकामुक्त्वा द्वितीयया होमः। रवते(ती) रवणे। यदा शब्दं करोति तदा होमः। वषट्कारः एवास्य स इति॥ १७॥

**यस्य रवते जुहोति तां दक्षिणां ददाति॥ १८॥**

[क]यस्मिन् रवति होमः स दक्षिणा। यदा ब्रह्मा तदा न दक्षिणा। [ख]विहृत्य पूर्णदर्व्यमुपदेशः॥ १८॥

**मरुद्भ्यः क्रीडिभ्यः स्वतवद्भ्यो वा पुरोडाशं सप्तकपालं निर्वपति। साकं सूर्येणोद्यता साकं वा रश्मिभिः प्रचरन्ति। सिद्धमिष्टिः सन्तिष्ठते॥ १९॥**

क्रीडिनः स्वतवसश्च विकल्प्यन्ते। यद्यप्यश्वमेधे[ग] समुच्चयः। अस्माकं क्रीड(डी)नामेवाऽम्नानात्। मरुद्भ्यः क्रीडिभ्यः, मरुतः क्रीडिनो हव्यं रक्षध्वं, मरुतां क्रीडीनामहं, मरुतः क्रीडिन इदं, हविः। मरुद्भ्यः स्वतवद्भ्यः, मरुतः स्वतवसो हव्यं, मरुतां स्वतवसामहं वृत्रहा॥ १९॥

॥ इत्येकादशी कण्डिका॥

**ततो महाहविषस्तन्त्रं प्रक्रमयति॥ १॥**

महान्ति हवींषि यस्मिन् तत् महाहविः। तच्च प्रधानम्। अङ्गमन्या इष्टयः, महाहविष्येव इदावत्सरीणां स्वस्तिमाशास्त इत्याशिषो बन्धनात्॥ १॥

**तस्य वारुणप्रघासिकेनोत्तरेण विहारेण कल्पो व्याख्यातः॥२॥**

---

क. यस्मिन् ऋषभे रवति सति होमः क्रियते स ऋषभो दक्षिणात्वेन देय इति।

ख. गार्हपत्यात् पृथगग्निं विहृत्य तत्र पूर्णदर्व्यहोमः कर्तव्य इत्युपदेश इति।

ग. अश्वमेधे चातुर्मास्यदेवताकेषु पशुषु मरुद्भ्यः क्रीडिभ्यः संसृष्टान्, मरुद्भ्यः स्वतवद्भ्योऽनुसृष्टान् (आप. श्रौ. २०. १४. ९. १०.) इति समुच्चय उक्तः, तथापीह विकल्प एव। समुच्चयस्य तत्र शाखान्तरोक्तस्य ग्रहणात्। अस्मच्छाखायां क्रीडीनामेवाम्नानादिति॥ ( See शुक्लयजुःकाण्वसंहिता २९. २० )

तेनोत्तरेण विहारेण स विधिर्व्याख्यातो महाहविषः। अत उदवसाय क्रियते। नीकवतादीनामप्येतदङ्गत्वात् स एव च देशः। [क]कालभेदात् कर्मणि कर्मण्यन्योऽग्निः। ोडिन्या ब्राह्मणभोजनान्ते परित्यज्याग्निं महाहविषा यक्ष्ये इत्युक्त्वा वेदो वेदिः। प्रागुत्तरा- रिग्रहात्कृत्वा उत्तरवेदिः। पशुबन्धवदुत्तरविहारतुल्यं प्रणयनमग्न्यन्वाधानं साकमेध ँ हविरि- मेषां मयीति सर्वास्विष्टिषु। इह द्विनामत्वात्साकमेधं महाहविषं हविरिदमेषां मयीति न्नाद्यवर्जमुत्तरविहारतुल्यं सर्वम्। द्वित्वाभावान्नचोहो ब्रह्मणः॥ २॥

**निर्वपणकाल आग्नेयमष्टाकपालमित्यष्टावुत्तराणि हवींषि निर्व- ति॥ ऐन्द्रस्य चरोः स्थान इन्द्राय वृत्रघ्ने चरुमेके समामनन्ति॥३॥**

इन्द्राय वृत्रघ्ने, इन्द्र वृत्रहन्, इन्द्रं वृत्रहणं, इन्द्रस्य वृत्रघ्नः, इन्द्रो वृत्रहेदं हविः, वेश्वकर्मणे, विश्वकर्मन्, विश्वकर्माणं, विश्वकर्मणः, विश्वकर्मेदं हविः॥ ३॥

**अग्ने वेर्होत्रं वेर्दूत्यमूर्ध्वो अध्वरेस्थात्। अवतां त्वा द्यावा- पृथिवी अव त्वं द्यावापृथिवी। स्विष्टकृदिन्द्राय देवेभ्यो भव जुषाणो अस्य हविषो घृतस्य वीहि स्वाहेति स्रुच्यमाघारयति। वागस्याग्नेयी- त्यनुमन्त्रयते यजमानः॥ ४॥ सहश्च सहस्यश्चेति चतुर्भिर्मासना- मभिरेककपालमभिजुहोति। धेनुर्दक्षिणर्षभो वा प्रवयाः। इडावत्स- रीणां स्वस्तिमाशास्ते। दिव्यं धामाशास्त इति सूक्तवाकस्याशीःषु होतानुवर्तयते। एवं यजमानो जपति। आशास इति मन्त्रं संनमति॥५॥**

स्रुच्यमन्त्रे बह्व्यो देवताः। अत आग्नेयीत्यूहो[ख] बद्धः। [ग]नानाबीजधर्मेणै

---

क. देशभेदाभावेऽपि कालभेदेन प्रयोगभेदः प्राप्नोति। प्रतिप्रयोगं च पूर्वस्याग्नेः परित्यागः, पुनश्च तस्य गार्हपत्यात् प्रणयनमिति।

ख. अयं भावः—'अग्ने वेर्होत्रं' इत्ययं मन्त्रः स्रुच्याघाराङ्गभूतः। तत्र बह्व्यो देवताः श्रूयन्ते। तत्राग्नेः प्रथमश्रुतत्वात् तदनुरोधेनोहः वागस्याग्नेयीति। स च सूत्रकारेणोक्तः। एतत्सूत्रलिङ्गानुरो- धेनान्यत्रापि यत्र मान्त्रवर्णिकदेवताकल्पनं तत्र बहुदेवताकत्वे प्रथमस्यैव देवतात्वमिति तदनुरोधे- नोहः। यत्र तु विशेषणविशेष्यभावः तत्र द्वयोः पदयोस्समुच्चय इति।

ग. राजसूये नानाबीजेष्टिः—"अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणां सोमाय वनस्पतये श्यामाकं चरुं बृहस्पतये वाचस्पतये नैवारं चरुम्" इति विभिन्नद्रव्यताम्नाता। तत्र पृथक् पृथगेव प्रतिद्रव्यं निर्वापावघातादयो विहितास्तत्तद्रव्यस्वरूपाविनाशाय। तद्वदेवाऽत्रापि पृथगे- वैन्द्राग्नस्य निर्वापावहननपरापवनादि कार्यम्। तदीयाश्च तुषा अन्यैरसंकीर्णाः पृथक् प्रज्ञातं निधातव्याः। तेषामवभृथकालेऽप्सु प्रतिपत्तिविधानादिति।

न्द्राग्नस्य तुषाः पृथक् क्रियन्ते। अदब्धेन वश्चक्षुषा व इत्येवमादि पुनस्सह। "इन्द्राग्नी रोचना दिवः"[1] श्नथद्वृत्रम्[2] इत्यैन्द्राग्नेष्ट्याः, तमिन्द्र[3] वाजयामसि, युजेरथमिति[4] वृत्रघ्नः, वारुणप्रघासिकस्विष्टकृत् अग्ने नया देवतानामिति। न वैश्वदैविकः ॥ ४, ५ ॥

**ऐन्द्राग्नतुषानप्सु प्रतिपादयति ॥ ६ ॥**

प्रणीताविमोके कृते ऐन्द्राग्नतुषा अप्युत्क्षिप्यन्ते एतद्ब्राह्मण ऐन्द्राग्न इति ॥ ६ ॥

**सिद्धमिष्टिःसन्तिष्ठते ॥७॥**

ततः प्रणीतामार्जनादि ब्राह्मणभोजनान्तं सिद्धं यत्प्रकृतौ कपालविमोकान्तं तेन संस्थापयति न खण्डसंस्था ॥ ७ ॥

**॥ इति द्वादशी कण्डिका ॥**

**इत्यापस्तम्बीयश्रौतसूत्रीये धूर्तस्वामिभाष्ये तृतीयः पटलः समाप्तः ॥**

---

१ इन्द्राग्नी रोचना दिवः परिवाजेषु भूषथः। तद्वां चेति प्रवीर्यम्। (तै. सं. ४.२. ११. १.)

२ श्नथद्वृत्रमुत सनोति वाजमिन्द्रा यो अग्नी सहुरी सपर्यात्। इरज्यन्तावसव्यस्य भूरेस्सहस्तमा सहसा वाजयन्ता। (तै. सं. ४. २. ११. १)

३ तमिन्द्रं वाजयामसि महे वृत्राय हन्तवे स वृषा वृषभो भुवत्। (तै. ब्रा. २. ४. १. ३.)

४ युजे रथं गवेषणं हरिभ्यामुप ब्रह्माणि जुजुषाणमस्थुः। विबाधिष्ट स्य रोदसी महित्वेन्द्रो वृत्राण्यप्रती जघन्वान्॥ (तै. ब्रा. २. ४. १. ३.) आश्वलायनेन त्वन्ये उक्ते।

# चतुर्थः पटलः

**तदानीमेव पितृयज्ञस्य तन्त्रं प्रक्रमयति ॥ १ ॥**

तदानीमेव तस्मिन्नेव काले समाप्ते महाहविषि पितृयज्ञेन यक्ष्य इत्युक्त्वा विद्युदसि आहवनीयप्रणयनं यदा वेदिः सम्भवति ॥ १ ॥

**वेदं कृत्वाग्रेणान्वाहार्यपचनं यजमानमात्रीं चतुस्स्रक्तिं वेदं(दिं) करोति ॥ २ ॥**

ततो वेदः अग्रेणान्वाहार्यपचनं यजमानमात्री चतुस्स्रक्तिः स्रक्तयः कोणास्ते भवन्ति ॥ २ ॥

**प्रतिदिशं स्रक्तयोऽवान्तरदेशान्प्रति मध्यानि ॥ ३ ॥**

प्रतिदिशमवान्तरदेशाः कोणाः तान् प्रति मध्यानि भवन्ति क्रियन्ते ॥ ३ ॥

**उद्धनाऽखाता भवति ॥ ४ ॥**

उद्धननं न खननं देवस्य सवितुः सवे इति । नापि 'इमां नरा' इति तदर्थः प्रैषः ॥ ४ ॥

**न प्राची वेदिरुद्धत्या । पितृयज्ञो हि । न दक्षिणा । यज्ञो हि । उभे दिशावन्तरोद्धत्या । उभये हि देवाश्च पितरश्चेज्यन्त इति विज्ञायते ॥५॥**

प्राचीं प्रागपवर्गाम् । उद्धननं न कर्तव्यम् । तच्च प्रदर्शनार्थं नापि वेदिसंमार्गादि । न च प्राची । यस्मात् पितृयज्ञः । नापि दक्षिणा, यस्मात् यज्ञः । देवा अप्यत्रेज्यन्ते । अत उभे दिशौ प्राचीं च दक्षिणां चान्तरा उद्धननं कर्तव्यम् । यस्मादुभय इज्यन्ते देवाश्च पितरश्च ॥ ५ ॥

**ये के च देवसंयुक्ता मन्त्रा देवेभ्यः पितृभ्य इति तान् संनमति । यथा भवति पृथिवि देवपितृयजनीति ॥ ६ ॥**

ये के च देवसंयुक्ता मन्त्रा नार्थवादा देवेभ्यः पितृभ्य इति तेषामेव कर्तव्य ऊहः । "कर्मणे वां देवेभ्यः पितृभ्यःशकेय" मित्येवमादीनां "इदं देवानामि"त्येवं प्रकाराणां "देवेभ्यः पितृभ्यो जुष्ट ँ सदनाय बर्हिः यत्रैव चतुर्थी तत्रैव स्यादूहः । अतोऽन्यदप्युदाहरणमि-

त्युच्यते-पृथिवि देवपितृयजनीति। अतः सर्वत्र तत्परस्य वाक्यस्य समासे चासमासे चोहः। इदं देवानां पितॄणां देवपितृंगममसीति। केचन देवाः के च पितर इति। अत्रोच्यते—प्रयाजानूयाजदेवता देवाः सोमादयः पितरश्च इति केचित्। तदा तु निरुप्ताभिमर्शन [क]ऊहो न प्राप्नोति—इदं देवानामित्येवंप्रकाराणामन्येषां च। "उत्तरत एवोपनीय निर्वपेत्। उभये हि देवाश्च पितरश्चेज्यन्त" इति श्रुतेः प्रधानेष्वपि सन्ति देवाः। सोमः पितृमान् देवः इतरे पितर इति केचित् तच्च न लिङ्गम्। विरोधात्। "प्राचीनावीती सोमं यजति, पितृदेवत्या हि एषाहुतिरिति। अतः पितृष्वेवोभयम्, मासा वै पितरो बर्हिषदः ये वै यज्वानो मनुष्या माससमानलोकाः ते पितर एव बर्हिषदः। अर्धमासा वै देवा अग्निष्वात्ता अयज्वानो गृहमेधिनो मनुष्या अर्धमासस्थाने पितर एव ते। अतो निर्वापादप्यूहः—इदं देवानां पितॄणामिति ॥ ६ ॥

## अविकारो वा परवाक्यश्रवणात् ॥७॥

अविकारो वा परवाक्यश्रवणात्। न विकारः अविकारः, नान्यथाभावः, अविकारो वा भवति सर्वमन्त्राणाम्। [ख]वेद्युद्धननसामिधेनीप्रैषादिविधायकवाक्ये' उभये हि दोषा(देवा)श्च पितरश्चेज्यन्त' इति श्रूयते। नैतदूहस्य विधायकम्। अतोऽविकारस्सर्वत्र। अदृष्टविकल्पत्वाद्देवत्वस्य पितृष्वपि देवत्वमस्ति। अतश्चाविकारः। यथा राक्षसे पशौ रक्षोयजनीति न भवति। सर्पेष्टौ च सर्पयजनीति। तेषां देवत्वात्। एवमिहापि। [ग]केचित्त्वाहुः देवपितृ-

---

क. सोमपितृमदादीनां देवत्वं नास्ति। अतो "ये के च देवसंयुक्ता" इत्येतद्विषयत्वाभावात् तत्रोक्त ऊहो न प्राप्नुयात् 'इदं देवानां' इति निरुप्ताभिमर्शने, एवं प्रकारेष्वपि। केचित्तु 'उत्तरत एवोपनीय' इति निर्वापगुणविधायकवाक्यार्थवादे देवपितॄणामुभयेषां प्रधानसम्बन्धश्रवणादुभयेषां प्रदर्शनाय 'देवानां पितॄणां इत्यूहस्सिध्यतीति वदन्ति। तन्न युक्तम्। तस्यान्यविधिस्तावकत्वेनोहसाधकत्वाभावात्। तत्र प्रधानयागे प्राचीनवीतविधायके 'न प्राचीनावीती' इत्यनेन विरोधाच्च। अतो ए(ये)वै यज्वानो गृहमेधिनः इत्यादिश्रुत्यनुरोधेन मनुष्याणामेव मासादिसम्बन्धेन देवत्वं पितृत्वं चेति उभयस्वरूपबोधनायोहः देवानां पितॄणामित्यावश्यक एवेति।

ख. अस्मिन्प्रकरणे 'इमां दिशं वेदिमुद्धन्ति' (तै. ब्रा. १. ६. ८. २) 'इमां दिशं वेदिमुद्धन्ति' (तै. ब्रा. १. ६. २. ५) 'अग्नये देवेभ्यः पितृभ्यस्समिध्यमानायानुब्रहीत्याह' (तै. ब्रा. ३. ६. ९. १.) इति स्थलत्रयेऽपि 'उभये हि' इति वाक्यं श्रूयते। अतस्तद्विधिशेषतया तत्तद्विधेयार्थस्तावकतया प्रवृत्तस्यास्य नोहविधायकत्वं सम्भवति। अन्यार्थत्वात्। किं चेदं देवत्वं नामादृष्टैकसमधिगम्यम्। तच्च पितृष्वपि सम्भाव्यते। अत ऊहो नास्ति। किन्तु प्रकृतिवदविकारेणैव प्रयोग इति।

ग. केचित्तु असमवेतार्थानामदृष्टार्थत्वादनूहः। समवेतार्थानां तु दृष्टार्थत्वादूहो भवत्येवेति न्यायसिद्धम्। एवं च प्रकृते 'पृथिवि देवयजनी'ति वेदिस्तुत्यर्थतयाऽसमवेतार्थत्वात् तत्रानूहः। इदं देवानामित्यत्र

यजनीति एवंविधानामविकारः। वेदिपरे हि वाक्ये देवाः श्रूयन्ते न हविः परसम्बन्धेन, यथेदं देवानामिति। देवास्त्विज्यन्ते। नान्या जातिरिति वेदिः स्तूयते। अतो ये स्वार्था इदं देवानामित्येवमादयस्तेषामूह इति सिद्धम्। नत्वेतदेवम्। 'इदं देवानामित्येतदपि हविः-परम्। अतः पूर्वोक्त एवार्थः ॥ ७ ॥

**प्रागुत्तरात्परिग्राहात्कृत्वा दक्षिणाग्नेरग्निमाहृत्य मध्ये वेद्या उपसमादधाति ॥ ८ ॥**

समुद्धतमुत्करे न्युप्य दक्षिणाग्नेरग्निमाहृत्य मध्ये वेद्यां स्थापयित्वा [क]बलवन्तं करोति ॥ ८ ॥

**एतस्मिन् पितृयज्ञ आहवनीयकर्माणि क्रियन्ते ॥ ९ ॥**

पितृयज्ञे यान्याहवनीयकर्माणि तान्यस्मिन् क्रियन्ते। अग्निहोत्रहोमस्त्वाहवनीय एव ॥ ९ ॥

**अग्नीनन्वाधायेध्माबर्हिराहरति ॥ १० ॥**

अग्न्यन्वाधानादि सर्वम्। साकमेधपैतृयज्ञ " हविरिदमेषां मयीति। चतुर्दशीं ये प्रविष्टा इति यदा चतुर्दश्याम् ॥ १० ॥

**समूलं बर्हिर्दाति ॥ ११ ॥**

प्रस्तरवर्जं बर्हिस्तु लूयते। खात्वा लूयते। समूलं मूलेषु यानि पर्वाणि तत्रासिदस्य विधानम्, दातीति वचनात्। केचित् मूलं ते राध्यासमिति मूले गृहीत्वा उत्पाटयिता ते मा रिष इत्युत्पाटयन्ति। तदनुपपन्नम्। दातीति चोदितत्वात् ॥ ११ ॥

**उपमूललूनं वा ॥ १२ ॥**

समीपे मूलानां लवनम् ॥ १२ ॥

**वर्षीयानर्थादिध्मो द्राघीयांश्च ॥ १३ ॥**

प्रकृतावर्थलक्षण इध्मः स्थौल्येन। इह वर्षीयान् दीर्घश्चार्थात्। एकविंशतिधेत्यग्न्य-भिधानादनूहः बहुयाजिनो वैलिङ्ग्याच्च। द्वौ परिधी तिस्रस्समिधो यज्ञायुरनुसञ्चरानीति ॥ १३ ॥

---

तु देवानामिज्यमानत्वेन हविस्सम्बन्धसत्त्वात् समवेतार्थत्वादूहो भवत्येवेत्यभिप्रयन्ति। तन्न युक्तम्। 'इदं देवानाम्' इत्यपि हविस्तावकम्। न देवतापरमिति तस्याप्यसमवेतार्थाविशेषेणोहाप्रसक्तेरिति।

क. उपसमाधानमेव बलवत्करणम्। काष्ठकरीषप्रक्षेपादिभिरग्नेः प्रवर्धनमिति यावत्।

**अग्नीन्परिस्तीर्य पाणिप्रक्षालनादि कर्म प्रतिपद्यते। यथार्थं पात्रप्रयोगः ॥ १४ ॥**

निधायेध्मप्रव्रश्चनानि समूहनाद्यलंकरणान्ते परिस्तरणम्। षट् कपालानि भर्जनार्थं चैकम्। अग्निहोत्रहवणीमु(ण्य)दकुम्भश्च। तुल्यमन्यत्। पात्रीत्रयं एकैकश आसध(साद)नात्। शरावस्तृतीयः। नेडापात्रम् ॥ १४ ॥

**निर्वपणकाले सर्वतो वेदिं परिश्रित्योत्तरेण द्वारं कृत्वा दक्षिणतः प्राचीनी(ना)वीती हवींषि निर्वपति। उत्तरतो वा यज्ञोपवीती सोमाय पितृमत इति यथा समाम्नातम् ॥ १५ ॥**

उपवेषान्तानि प्रयुज्य निर्वपणकाले वेद्याःपरिश्रयणं वेष्टनं काटादिद्रव्यैः। स्रक्त्यामुत्तरस्यां द्वारमारुह्य दक्षिणतः शकटस्यावस्थितः पात्र्या वा [क]प्राचीनावीती उपसादनान्तं निर्वापाङ्गत्वात्, निरुप्येति चोदिताः अज्यान्य उपसादनान्ते बद्धा इति तदन्तस्य निर्वपणाङ्गत्वात्। केचिन्निर्वपणमात्रम्। प्राचीनावीतीति। यदातूत्तरतः शकटस्य पात्र्या वा तदा प्रकृतिवत्सर्वम् ॥ १५ ॥

**अथैकेषाम्। सोमाय पितृमत आज्यं पितृभ्यो बर्हिषद्भ्यः षट्कपालं पितृभ्योऽग्निष्वात्तेभ्यो धाना अग्नये कव्यवाहनाय यमाय वा मन्थं यमायाङ्गिरस्वते पितृमते ॥ १६ ॥**

यवानां सर्वाणि सोमाय पितृमते पितृभ्यो बर्हिषद्भ्यः पितृभ्योऽग्निष्वात्तेभ्य आज्यं उपांशुयाजधर्मेण अग्नये कव्यवाहनाय यमाय वा यमायाङ्गिरस्वते पितृमते वा देवताद्वयं मन्थस्यैव विकल्पेन भवति। द्वितीयः कव्यवाहन स्विष्टकृदर्थे विद्यते। [ख]एकेषां मतात्। सोम पितृमन्, पितरो बर्हिषदः, पितरोऽग्निष्वात्ताः, अग्नये(ग्ने) कव्यवाहन, यमाङ्गिरस्वन् पितृमन् ॥ १६ ॥

**उदकुम्भः प्रोक्षणीभाजनं भवति ॥ १७ ॥**

---

क. प्राचीनावीती भूत्वा 'पितृभ्यो जुष्टं निर्वपामि' इत्यारभ्य 'अपरेण गार्हपत्यं यथादेवतमुपसादयति' प्रकृतिविहितोपसादनान्तं कुर्यात्। तावत्पर्यन्तानां पदार्थानां निर्वापाङ्गत्वादिति। निर्वापाङ्गत्वोपपादनमेव निरुप्येत्यादिना।

ख. उत्तरसूत्रे प्रोक्षणीशेषेण यवसम्मिश्रणं कृत्वा फलीकरणविधान् पूर्वं हविःपात्रप्रोक्षणं कृत्वा उत्तरत्र इध्माबर्हिःप्रोक्षणार्थं अग्निहोत्रहवण्यां प्रोक्षणीरानीय स्थापयित्वा अवशिष्टकुम्भस्थजलेन संयवनं कर्तव्यमित्युपदेशमतम्। स्वमते तु सर्वप्रोक्षणं संयवनं च कुम्भस्थजलेनेति।

सर्वप्रोक्षणमुदकुम्भात्। उपदेशो हविः पात्रप्रोक्षे कृते अग्निहोत्रहवण्यामेव प्रोक्षण्य आनीयन्ते ताभिरुत्तराणि प्रोक्षणानीति ॥ १७ ॥

**प्रोक्षण्युद्रेकेण यवान्संयुत्य त्रिष्फलीकृतांस्तण्डुलान् विभाग-मन्त्रेण विभज्य धानार्थान्निधायेतरान्पिष्टानि कृत्वा दक्षिणार्धे गार्ह-पत्यस्य षट्कपालान्युपधाय दक्षिणाग्नौ प्रथमेन कपालमन्त्रेण धानार्थं कपालमधिश्रयति ॥ १८ ॥**

उद्रेकः शेषः। तेनावहननकाले यवा मिश्रीयन्ते। [क]अतश्च सर्वे यवाः। प्रक्षाल्य विभागः पेषाणार्थत्वात्। कृष्णाजिनादानम्। कृष्णाजिनादानात् प्राक् इदं सोमस्य पितृमतः, इदं पितृणां बर्हिषदाम्, पितृणाममिष्वात्तानां, अग्नेः कव्यवाहनस्य, यमस्य, यमाय( मत्या )ङ्गिर-स्वतः पितृमतो वा, षट्कपालस्य पेषणादि। आद्यैर्मन्त्रैः षट्कपालानि दक्षिणे भागे धानार्थ-स्याधिश्रयणं दक्षिणाग्नौ। प्रक्षाल्योपवेषम्। धानार्थानामप्युत्पवनं घर्मौ स्थो विश्वायुपाविति धानार्थानामधिश्रयणं हविर्द्विःत्वात्। अनूहः उपदेशः ॥

**अधिश्रयणकालेऽधिश्रयणमन्त्रेण तण्डुलानोप्य बहुरूपा धानाः करोति ॥ १९ ॥**

[ख]बहुरूपा धाना नानारूपा दग्धा अदग्धा ईषद्दग्धाः ॥ १९ ॥

**विदह्यमानाः परिशेरत इति विज्ञायते ॥ २० ॥**

परिशेरते तिष्ठन्ति। विविधं दह्यमानाः। न दह्यन्ते हन्यन्ते। [ग]स्वेनाग्निना-पर्यग्निकरणम्। धानाकपालस्याप्यध्यूहनं अङ्गाराधिवर्तनं च। तद्गतेनोष्मणा पाकात्। [घ]नोपदेशः। न प्रथनादीनि पर्यग्निकरणवर्जितानि धानानामाप्यलेपनिनयनान्ते उत्तरपरि-ग्रहणादि।

इति त्रयोदशी कण्डिका ॥

---

क. सर्वे यवा इति सर्वेषां हविषां यवमयत्वमेव। न व्रीह्यादिप्रकृतिकत्वमित्यर्थः। निर्वापकाले सर्वत्र यवोपदेशाभावेऽपि संयवनकालेऽविशेषेण "यवान्संयुत्य" इति संयवनविधानात् सर्वेषां हविषां यवप्रकृतिकत्वमेवेति।

ख. हविर्द्वयावयवस्य भर्जनावस्थायां संसर्गित्वान्नानारूपा दग्धा अदग्धाश्च तिष्ठन्तीति। भर्जिता यवा धानाः।

ग. षट्कपालस्य पुरोडाशस्य गार्हपत्याग्निना। धानानां दक्षिणाग्निनेति।

घ. चरुवदधोगतेनैवोष्मणा सिद्धेरङ्गारेण सह भर्जनस्यानुचितत्वादिति।

**संप्रैषकाले पत्नीवर्जं संप्रेष्यति ॥ १ ॥**

नान्वास्ते [क]पत्नीति श्रुतेः । असंनद्धाऽपि ॥ १ ॥

**आज्यग्रहणकाल उत्तरेण गार्हपत्यं चतुर्गृहीतान्याज्यानि गृह्णाति ॥ २ ॥ प्रोक्षणीनामभिमन्त्रणादि कर्म प्रतिपद्यते ॥ ३ ॥**

आज्यप्रोक्षणीषु चोत्पूयमानासु अभिमन्त्रितासूत्तरेण गार्हपत्यमाज्यग्रहणम् । [ख]उपभृति द्वाभ्यां प्रयाजार्थाभ्यां द्वाभ्यामनूयाजार्थाभ्याम् ॥ ३ ॥

**स्तरणकाले बर्हिषा त्रिः प्रसव्यं वेदिं स्तृणन्पर्येति ॥ ४ ॥**

ग्रन्थिविस्रंसने कृते स्तरणकाले दर्भैरन्तर्धानादि सर्वमादाय बर्हिः प्रसव्यं स्तृणन् गच्छति यथा सर्वास्तीर्यन्ते(ते) । त्रिरावृत्तिर्मन्त्रस्य ॥ ४ ॥

**औद्धवान्धारयमाणस्त्रिरस्तृणन्प्रतिपर्येति ॥ ५ ॥**

[ग]औद्धवास्तरणं कुर्वतः कतिपयाः शिष्टा हस्ते । तान्धारयमाणः प्रतिनिवर्तते पुनः ॥ ५ ॥

**औद्धवः प्रस्तरः ॥ ६ ॥**

सः प्रस्तरः ।

**प्रस्तरस्य ग्रहणसादने तूष्णीम् ॥ ७ ॥ न विधृती ॥ ८ ॥**

तस्मिन्नप्रस्तरे पवित्रे अपिसृज्य प्राणापानाभ्यां त्वेति प्रदाय ॥ ८ ॥

**द्वौ परिधी परिदधाति ॥ ९ ॥ मध्यमोत्तरौ सर्वान्वा ॥ १० ॥**

---

क. यद्यप्यत्र सूत्रकारेणान्वासनं न निषिद्धं तथापि 'पत्न्यन्वास्ते" इति श्रुतौ निषेधान्न पत्न्या अन्वासनमिति ।

ख. सूत्रे चतुर्गृहीतानीत्युक्तत्वात् उपभृति चतुर्गृहीतमेव । तत्राऽऽद्यं ग्रहणद्वयं प्रयाजार्थम् । अन्त्यमनूयाजार्थम् । प्रकृतावौपभृते आज्यग्रहणे "पञ्चानां त्वा दिशां" इत्यादिमन्त्रपञ्चात्मक एको गणः "चरोस्त्वा पञ्च बिलस्य" इत्यादिमन्त्रपञ्चकात्मश्चाऽपरो गणः पठितः । प्रकृतौ चोपभृति अष्टकृत्वो दशकृत्वोवाऽऽज्यग्रहणं विहितम् । तदपि गणद्वयेन विभक्तम् । तत्र प्रथमो गणः प्रयाजार्थः । द्वितीयश्चानुयाजार्थः । प्रकृते च द्वे द्वे एको गणः । तत्र प्रथमः प्रयाजार्थः । द्वितीयोऽनूया जार्थः । अतश्च प्रथमद्वितीये प्रयाजार्थाभ्यां प्रथमद्वितीयाभ्यां मन्त्राभ्यां ग्रहीतव्ये । तृतीयचतुर्थे तु द्वे ग्रहणे अनूयाजार्थाभ्यां प्रथमद्वितीयाभ्यां ग्रहीतव्ये इति ॥

ग. स्तीर्णावशिष्टा हस्तस्था दर्भा औद्धवा इत्युच्यन्ते ॥

परिधी परिदधाति मध्यमोत्तरौ । अभिमन्त्रणादि आधारसमिदन्ते स्तरणं प्रस्तरस्य तूष्णीमेव । न च विष्णोस्स्तूपोऽसीत्याहवनीयं प्रति ग्रहणम् । केचित् संजानाथामित्यपादानं तूष्णीमाहुः । अविक्षोभाय परिधी दधामीत्यूहुः ॥ १० ॥

**यदि सर्वानावाहनकाले परिधीँ रपोर्णुवति वाऽभिज्ञाय दक्षिणं मध्यमे परिधावुपसमस्येत् ॥ ११ ॥**

यदा तु सर्वे परिधयः तदा निवित्सूक्तासु दक्षिणो मध्यमेन परिधिना सह स्थाप्यते । [क]द्वितीयया पुरोनुवाक्यया सह सोमस्य पितृमतः ॥ ११ ॥

**उद्वासनकाले धाना उद्वास्य विभागमन्त्रेण विभज्यार्धा आज्येन संयौति ॥ १२ ॥**

प्रस्तरसादनादिषट्कपालोद्वासनान्ते धानाः कपालादुद्वास्यन्ते । [ख]भुवनस्य गोपौ श्रृतावुत्स्नातौ जनितारौ मतीनामिति । केचित्तु बहुवचनेन सर्वधानानां [ग]बहुवचनचोदितत्वात् । न त्वेवम् । यद्येकवचनेन चोद्येरन् एकैव धाना हविः स्यात् । सर्वाण्यग्नीषोमीयविकाराणि । सोमस्यापि प्रकृतिदेवतात्वात् । यदाज्यं सोमस्य पितृमतः तदोपांशुयाजविकारः । मन्थदेवताश्च आग्नेयविकारा एव । एकेषां मतेन सहकपालानां तूष्णीमुद्वासनम् । उपदेशः यथाभागं व्यावर्त्तेतामिति विभज्य स्वस्यां निधाय पात्र्यामाज्येनार्धे तूष्णीं मिश्रयेतेति ॥ १२ ॥

---

क. "त्वँ सोम प्रचिकेतो मनीषी" द्वितीया सोमस्य पितृमतः पुरोनुवाक्या । तद्गतस्य "वन्वन्न वासः परिधीँ रपोर्णु" इति भागस्य होत्रा पठ्यमानस्य श्रवणकाले वा दक्षिणस्य परिधेः मध्यमेन सह स्थापनम् ।

ख. आर्द्रः प्रथस्नुर्भुवनस्य गोपाः श्रृत उत्स्नाति जनिता मतीनामिति प्रकृतौ पुरोडाशोद्वासनमन्त्रः । तत्र प्रथमतः आर्द्रः प्रथस्नुरिति पदद्वयं परित्यज्येतरेषां प्रथमैकवचनान्तानां द्विवचनेनोहं कृत्वा पाठः । अत्र हि हविर्द्वयार्थमिमा धाना भ्रज्यन्ते । पितृभ्यो बर्हिषद्भ्यो धानाः इत्येकं हविः । पितृभ्योऽग्निष्वात्तेभ्यो वान्यार्थं दुग्धे मन्थमिति द्वितीयम् । अतो हविर्द्विवचनेनोहः । भर्जितासु धानासु आर्द्रत्वाभावात् पुरोडाशवत्प्रथनाभावाच्च आर्द्रः प्रथस्नुरिति पदद्वयलोप इति ॥

ग. धाना उद्वास्य बहुरूपा धानाः करोतीत्यादौ सर्वत्र धानानां बहुवचनेनैव चोदितत्वात् अत्र बहुवचनान्तेनैवोहः कर्तव्य इति केषांचिन्मतम् । तत्खण्डयति नेत्यादिना । यद्येकवचनेनोच्येरन् धानाः तदा पुरोडाशवत्सर्वाभिर्धानाभिरेकमेव हविः पर्यवस्येत् । तन्माभूदितिबहुवचनम् । अतो नानेन बहुवचनान्तोहसिद्धिरिति । रुद्रदत्तस्तु-बहुवचनान्तोहपक्षमेवाभ्युपगच्छति "धानास्वभिमन्त्रणाविमन्त्राणां बहुवदूहः पूर्ववत्" इति See. P. 67. आप. श्रौ II A. S. ed.

**अर्धाः पिष्टानामावृता सक्तून्कृत्वाभिवान्यायै दुग्धस्यार्ध-शरावे सक्तूनोप्यैकयेक्षुशलाकयेक्षुकाण्डेन वा दक्षिणामुखः त्रिः प्रसव्यमनारभ्योपमन्थति ॥ १३ ॥**

अर्धाश्च सक्तून्करोति। पिष्टक्रियया। कृष्णाजिनदानाद्यणूकरणान्तम्। चतुर्थ्याधिवापः। अर्धपूर्णे मल्लके (?) पात्रीस्थानीये सक्तून् क्षिपति। अत्र ग्रन्थपात इव भाति बध्यान्येन मन्थति। अनारभ्य ॥ १३ ॥

**शलाकास्थं मन्थं कृत्वैकैकशो हवींष्यासादयति ॥ १४ ॥**

शलाका तिष्ठति यस्मिन्मन्थे स शलाकास्थः। एतत्कृत्वाऽलङ्कृत्यासादयति। आसादनमन्त्रस्य चावृत्तिः प्रियेणेति ॥ १४ ॥

**दक्षिणतः कशिपूपबर्हणमाञ्जनमभ्यञ्जनमुदकुम्भमित्येकैकश आसाद्य वेदं निधाय सामिधेनीभ्यः प्रतिपद्यते ॥ १५ ॥**

"अयं यज्ञो" "ममाऽग्ने" इति कृते आसन्नाभिमर्शने [क]कशिप्वादीनामासादनम्। एकेषां मतेनाग्नेयवन्मन्त्रस्यैकैकशः ॥ १५ ॥

**अग्नये देवेभ्यः पितृभ्यः समिध्यमानायानुब्रूहीति संप्रेष्यति॥१६॥**

अग्नये देवेभ्यः पितृभ्यः समिध्यमानयाऽनुब्रूहीति नित्यो [ख]नोहः ॥ १६ ॥

**एकां सामिधेनीं त्रिरन्वाह। उशन्तस्त्वा हवामह इत्येताम् ॥ १७ ॥**

[ग]उशन्तस्त्वेत्येषैव एका। बहुवद्याज्यादीनामपि नापरिमितमुच्यते। त्रिरेव नैमित्तिकस्याऽपि प्रत्याम्नायः प्रत्यक्षविधिः सर्वत्र ॥ १७ ॥

**एकामनूयाजसमिधमवशिष्य समशः इध्मं त्रैधं विभज्य त्रिरादधाति समानमाप्रवरात् ॥ १८ ॥**

समशः समविभागेन त्रैधं त्रिभिर्भागैः ॥ १८ ॥

---

क. कशिपुः शयनीयम्। उपबर्हणं उपधानम्। अमरस्तु कशिपुशब्दस्य वस्त्रमर्थं ब्रुवन्बभ्राम। आञ्जनमक्ष्णोरञ्जनाय। अभ्यञ्जनं तैलादिकं शरीरोद्वर्तनाय। उदकपूर्णः कुम्भ उदकुम्भः स्नानाचमनादिव्यवहाराय।

ख. अविकारपक्षेऽप्येवमेव। पठितत्वात् ॥

ग. उशन्तस्त्वा हवामहे उशन्तस्समिधीमहि। उशन्नुशत आवह पितॄन् हविषे अत्तवे। तै. स. १.३.१२.१.

**नार्षेयं वृणीते न होतारम् ॥ १९ ॥ आश्राव्याह सीद होतरिति । एतावान्प्रवरः ॥ २० ॥**

आर्षेयवरणप्रतिषेधो होतुरध्वर्योश्च, [क]प्रतिषेधः प्रवरस्य । केचिदध्वर्योरेव न होतुः । [ख]वेदान्तरकारित्वात् । अग्निरार्षो देवो होता । मानुषो होतैव । आर्षेयवरणप्रतिषेधे "देवाः पितर" इत्यस्यापि निवृत्तिरिति । केचित् [ग]अन्यवरणशङ्कासमाध्यर्थोऽयमिति ॥ २० ॥

**अपबर्हिषः प्रयाजानिष्ट्वा जीववन्तावाज्यभागौ यजति ॥ २१ ॥ आ नो अग्ने सुकेतुना रयिं विश्वायुपोषसम् । मार्डीकं धेहि जीवसे ॥ त्वं सोम महे भगं त्वं यून ऋतायते । दक्षं दधासि जीवस इति जीववन्तौ ॥ २२ ॥ अत्र वेद्याः परिश्रयणमेके समामनन्ति ॥ २३ ॥**

बर्हिर्वर्जाः प्रयाजाः । [घ]पञ्चमार्थं समानयन् पशौ च पञ्चमविकारेषु समानयनदर्शनात् ॥ २३ ॥

इति चतुर्दशी कण्डिका ॥

**विस्रस्य यज्ञोपवीतानि प्राचीनावीतानि कुर्वते । विपरिक्रामन्त्यृत्विजः । विपरिहरन्ति स्रुचो हवींषि परिश्रयणानीति ॥ १ ॥**

शक्या ये(षां) विमोक्तुं ग्रन्थयः तेषां वाससां सूत्राणां वा क्रियते । आज्यभागाविष्ट्वा तान्विस्रस्य विमुच्य ग्रन्थीन्प्राचीनावीतानि कुर्वन्ति । पुनश्च ग्रन्थयः क्रियन्ते । शक्य(क्या)-विमोकाये(य) । विपरिक्रामन्त्यृत्विजः । विविधं परिक्रामन्ति । ब्रह्मोत्तरतो गच्छति ।

---

क. "नार्षेयं वृणीत" इति सामान्यतः प्रवरमात्रस्य प्रतिषेधात् उभयोरपि होत्रध्वर्युप्रवरयोर्निषेधः सिध्यति ।

ख. ऋग्वेदोक्तकर्मकारित्वात् याजुषहौत्रस्यापि ऋग्वेदोक्तहौत्रशेषत्वात् ऋग्वेदे चार्षेयवरणप्रतिषेधाभावात् न होतुस्तत्प्रतिषेध इति केषांचिन्मतमिति ॥

ग. एवं च "देवाः पितर" इत्यस्यानिवृत्तिर्भाष्यकारस्याभिप्रेता । रुद्रदत्तस्तु निवृत्तिपक्षमेवाङ्गीकरोति । See आप श्रौ. Vol. II. P. 69.

घ. पञ्चमः स्वाहाकारप्रयाजः । तदर्थमौपभृतस्याज्यस्य जुह्वां प्रक्षेपणमिति । प्रकृतौ चतुर्थप्रयाजानुष्ठानारम्भे यत् औपभृदाज्यस्य जुह्वां समानयनमुक्तं तत्तदनन्तरानुष्ठेयबर्हिःस्वाहाकारप्रयाजद्वयार्थम् । पशुयागे स्वाहाकारविकारभूतेऽष्टमप्रयाजेऽपि औपभृदाज्यसमानयनविधिदर्शनात् । अतोऽत्र चतुर्थप्रयाजाभावेऽपि पञ्चमप्रयाजारम्भे समानयनं कर्तव्यमिति ।

होताऽऽग्नीध्रश्च । दक्षिणतः । अध्वर्युश्च । विपरिक्रमणं स्थानपरिवर्तनम् । विपरिहरणं च परिश्रयणानां पूर्वापरयोश्च दक्षिणोत्तरयोश्च परिवर्तनं वचनकृतम् । स्रुचां च हविषां च ।

**दक्षिणेन जुहूमुपभृतं सादयति । दक्षिणेनोपभृतं ध्रुवां दक्षिणेन पुरोडाशं धानास्ता दक्षिणेन मन्थम् ॥ २ ॥ समानत्र जुहूषट्कपालौ ॥ ३ ॥**

जुहूश्च षट्कपालश्च जुहूषट्कपालौ । समानत्र समानस्थाने । अचलिता जुहूः षट्कपालश्च ॥ ३ ॥

**ब्रह्मयजमानावित्येके ॥ ४ ॥**

ब्रह्मयजमानौ च ॥ ४ ॥

**षडवत्तः पञ्चावत्तिनां पञ्चावत्तश्चतुरवत्तिनाम् ॥ ५ ॥**

षडवत्तो होमो भवति पञ्चावत्तिनां यजमानानाम् । चतुरवत्तिनां पञ्चावत्तम् ॥ ५ ॥

**सम्भिन्दन्पुरोडाशस्यावद्यति ॥ ६ ॥**

सम्भेदः सङ्गमः अवदानानां यथा न भिद्यते तथावदानं ग्रहीतव्यमिति केचित् । साम्भिन्दन्निति सम्यग्भेदाभिप्रायमिति ॥ ६ ॥

**द्विः प्रथमस्याऽवद्येत्पञ्चावत्तिनः ॥ ७ ॥**

प्रथमस्य हविषो द्विरवदानं पञ्चावत्तिनः । इतरयोः सकृत्सकृत् ॥ ७ ॥

**जुह्वामुपस्तीर्य सोमाय पितृमतेऽनु स्वधेति संप्रेष्यति ॥ ८ ॥ सकृत्पुरोडाशस्यावद्यति सकृद्धानानां सकृन्मन्थस्य ॥ ९ ॥**

सन्ततश्रुतेः । यागे यागे सर्वहविषां ग्रहणम् ॥ ९ ॥

**दक्षिणतोऽवदायाभिघार्योदङ्ङतिक्रम्य दक्षिणामुखस्तिष्ठन्नास्वधेत्याश्रावयति ॥ अस्तु स्वधेति प्रत्याश्रावयति । सोमं पितृमन्तं स्वधेति संप्रेष्यति । ये स्वधामह इति यजति । स्वधा नम इति वषट्करोति ॥ १० ॥**

प्रकृतिवत्प्लुतिः स्वधाकारपक्षेऽपि आ३स्वा३धा इति । दक्षिणतोऽवस्थितो हविषां गृह्णाति । अवदानं मन्थ्यादेव । उदगत्वा आ३स्वा३धा । अस्तु स्वा३धा । स्वा३धा नमः ॥ १० ॥

**स्वधाकारं तु प्रतिषिध्य बह्वृचवाजसनेयिनामाश्रुतप्रत्याश्रुतान्येव विदधाति ॥ ११ ॥**

आश्रुतप्रत्याश्रुतानि प्रकृतिवत् । बह्वृचवाजसनेयिनां विहितत्वात् ॥ ११ ॥

**द्वे पुरोऽनुवाक्ये अन्वाह । ऋचमुक्त्वा प्रणौति ॥ १२ ॥ त्वं [क]सोम प्रचिकित इत्येता आम्नाता भवन्ति ॥ १३ ॥ एका याज्या ॥ अग्निष्वात्ता येऽनग्निष्वात्ता अंहोमुचः पितरः सोम्यासः । परेऽवरेऽमृतासो भवन्तोऽधिब्रुवन्तु ते अवन्त्वस्मान् । वान्यायै दुग्धे जुषमाणः करम्भमुदीराणा अवरे परे च । अग्निष्वात्ता ऋतुभिः संविदाना इन्द्रवन्तो हविरिदं जुषन्तामिति पितृभ्योऽग्निष्वात्तेभ्यः ॥ १५ ॥**

[ख]अनुवाक्यामुक्त्वाऽधिकः प्रणवः ॥ १२-१५ ॥

**उपांशुपरिश्रिते पितृयज्ञेन चरन्ति ॥ १६ ॥**

उपांशु प्रचरन्ति पितृयज्ञेन । पुनः परिश्रितवचनात् स्विष्टकृत् कव्यवाहनेऽपि उपांशुत्वमेव ॥ १६ ॥

**एतेनैव कल्पेन पितॄन्बर्हिषदो यजत्यग्निष्वात्तान् ॥ १७ ॥**

[ग]एष विधिरुत्तरेषां यस्सोमस्य ॥ १७ ॥

**अग्निं कव्यवाहनं स्विष्टकृदर्थे यजति ॥ १८ ॥**

[घ]यदा कव्यवाहनाय मन्थः तदापि स्विष्टकृदर्थो द्वितीयः कव्यवाहनः। सोमं पितृमन्तं

---

क. " त्वं सोम प्रचिकेतो मनीषा " " त्वया हि नः पितरः सोम " इति सोमस्य पितृमतः पुरोनुवाक्याद्वयम् । " त्वं सोम पितृभिः संविदान " इत्येका याज्या " बर्हिषदः पितर अत्यर्वाक् " " आहं पितॄन्सुविदत्रॉ अवीहि " इति बर्हिषद्भ्यः पितृभ्योऽनुवाक्याद्वयम् । उपहूताः पितरः सोम्यासो बर्हिष्येषु " इत्येका याज्या । " अग्निष्वात्ताः पितर एह गच्छत " इत्येका संहितापठिता, येऽग्निष्वात्ता इति सूत्रपठितापरा चेति द्वे पुरोऽनुवाक्येऽग्निष्वात्तेभ्यः । वान्यायै दुग्धे जुषमाणा इति सूत्रपठिता ऋग्याज्या इति सूत्रार्थः ॥

ख. पुरोऽनुवाक्यामुक्त्वा तस्या अन्तिममक्षरं विकृत्य तत्र प्रणवस्य योजनम् । इत्येकःपक्षः । यथा पितॄन्हविषे अत्तवो३म् इति । पुरोऽनुवाक्यां यथावदुक्त्वा ( अन्तिममक्षरमविकृत्यैव ) तदुपरि प्रणवयोजनम् इत्यपरः यथा पितॄन्हविषे अत्तवे ओ३म् इति । तत्र द्वितीयपक्ष एव युक्त इति ।

ग. द्वे पुरोऽनुवाक्ये । एका याज्या इत्यादिः । स्वधाकारः । उदगतिक्रमणादिकं च ।

घ. एतेनैवेति वचनात् अग्निस्विष्टकृतः कव्यवाहनस्यापि सर्वे इमे धर्माः । यदा तु पूर्वोक्तरीत्या ( ८ १६-

यजति पितॄन्बर्हिषदः । पितॄनग्निष्वात्तान् । अग्निं कव्यवाहनं यमं वा । यममङ्गिरस्वन्तं पितृमन्तं वा । यदा सोमायाऽऽज्यं तदा ध्रुवादीनां सकृत्सकृदवदायाभिघारणमेव ध्रुवायाः पञ्चावत्तश्चतुरवत्तिनामिति द्विः प्रथमं ध्रुवायाः षडवत्तः पञ्चावत्तिनामिति नोपस्तरणं सोमायाऽऽज्ये ॥ १८ ॥

**यां देवतां यजेत्तद्धविषः प्रथममवदानमवद्यति । स चावदानकल्पः ॥ १९ ॥**

या देवतेज्यते तद्धविषोऽवदाय पुनः प्रथमादेव गृह्णाति क्रमेण । स चावदानकल्प इति वचनात् । हुत्वा नारिष्ठान् स्विष्टकृत् । [क]अग्नये कव्यवाहनायानुब्रूहीति कव्यवाहनत्वं स्विष्टकृद्गुणस्य निवर्तकम् । अग्नये कव्यवाहनाय " स्विष्टकृते " इति बौधायनः ॥ १९ ॥

**मन्थ इडामवद्यति मन्थं वैव ॥ २० ॥**

वैश्वानरे हविरिति कृत्वा प्राशित्रं ततो [ख]मन्थ इडामुपस्तीर्य गृह्यते । हविषोरितरयोः । केवलो वा मन्थः । इडावदानमन्त्रस्य याजमानस्य च निवृत्तिः, अर्थलोपात् । [ग]अवघ्रेण भक्षिते प्राशित्रे मन्त्रेण । या अप्स्वन्तरिति निवृत्तिः । अर्थलोपात् । केचिद भिमर्शन (स्यापि नाभ्यादेः) ॥ २० ॥

**मन्थं होत्र आदधाति ॥ २१ ॥**

---

१९) मन्थे अग्निष्वात्तानां स्थाने अग्निः कव्यवाहनो विकल्प्यते तदापि स्विष्टकृदर्थे अन्यः कव्यवाहनोऽग्निः प्रत्येतव्यः ।

क. प्रकृतौ " अग्नये स्विष्टकृतेऽनुब्रूही " ति संप्रैषः । अत्र स्विष्टकृत्त्वमग्नेर्गुणः । तत्स्थानेऽत्र कव्यवाहनत्वं गुणो विधीयते । एवं च प्राकृतस्य गुणस्य वैकृतेन गुणेन शरवद्बाधः । इति । बोधायनस्तु प्राकृतस्य वैकृतस्य च गुणद्वयस्यापि पाठमिच्छतीति ।

ख. मन्थहविश्शेषयुक्त एव पात्रे इतरहविषोरिडावदानम् । अतो मन्थार्थं नोपस्तरणम् । उपस्तरणस्य हविषः पात्रे हविरसंसर्गार्थत्वात् । अत्र तदभावादिति । इतरयोस्तूपस्तरणं भवत्येवेति । केवलो मन्थ एवेडा । तदाज्यावदानाभावात् तन्मन्त्रस्य तत्सम्बन्धिनो याजमानमन्त्रस्य च लोप एव " सुरूपवर्णवर्षे " इत्यस्यापि । इति ।

ग. उत्तरत्र वक्ष्यति–सर्वेषां हविषामवघ्राणेनैव भक्षणम्–अवघ्रेण सर्वभक्षाः–इति । एवं च मन्थस्याप्यवघ्राणेन भक्षणकरणेऽपि तस्यापि भक्षणप्रकारत्वान्न मन्त्रस्य लोपः । या अप्स्वन्तर्देवतास्ता इदँ शमयन्तु स्वाहाकृतं जठरमिन्द्रस्य गच्छ स्वाहा इति मन्त्रस्य लोपः । आस्यगतप्राशित्रस्यान्तःप्रवेशपूर्वकजरणार्थत्वात् । अवघ्राणे च तदभावार्थलोपाद्बाध इति ।

अवघ्रेण प्राश्य अवान्तरेडामिडां च षट्कपालधानानां मन्थं होत्रेऽवघ्राणार्थं तस्यैव हस्त आदधाति ॥ २१ ॥

**तं होताऽवजिघ्रति ॥ २२ ॥**

**॥ इति पञ्चदशी कण्डिका ॥**

**ब्रह्माध्वर्युरग्नीध्यजमानश्च ॥ १ ॥ अपि वा न यजमानः ॥ २ ॥**

तं होत्रादयः क्रमेणावजिघ्रन्ति मन्त्रेणैव ॥ २२ ॥ १. २. ॥

**समशो वा प्रतिविभज्यावघ्रेण भक्षयित्वा बर्हिषि लेपान्नि-मृजन्ते ॥ ३ ॥**

यदापि केवलो मन्थ इडा तदापि होतुर्हस्तस्थितामवान्तरेडां यजमानः समशः समैर्भागैर्विभज्य मन्थमवघ्रेण भक्षयित्वा इडां मन्त्रेण । लेपनिमार्गो बर्हिषि । समप्रविभागपक्ष एव लेपनिमार्ग इति केचित् । अवघ्राय मन्थं मनो ज्योतिरिति मार्जनम् । तत उदकुम्भादानादि याजमानम् । कृते मार्जने मन्थावघ्राणमधिकम् । नेडा प्रत्याम्नाय इत्युपदेशः । धानाषट्कपालेभ्यो यजमानभागः । यदापि [क]केवलो मन्थ इडा ॥ ३ ॥

**उदकुम्भमादाय यजमानः शुन्धन्तां पितर इति त्रिः प्रसव्यं वेदिं परिषिञ्चन्पर्येति ॥ ४ ॥**

य आसादित उदकुम्भः तमादाय " शुन्धन्तां पितर " इति सकृन्मन्त्रमुक्त्वा त्रिः परिषिञ्चति ॥ ४ ॥

**निधाय कुम्भमयाविष्ठा जनयन्कर्वराणीति त्रिरपरिषिञ्चन्प्रति-पर्येति ॥ ५ ॥**

निधाय कुम्भं पुनर्गृह्णीत इति केचित् । अपरिषिञ्चन्निति प्रतिषेधात् । यदि कुम्भो न गृह्येत [ख]परिषेकप्रतिषेधोऽनर्थक इति । [ग]द्रव्यान्तरेण वा मा भूत्परिषेक इति प्रतिषेधः । प्रतिपर्येति निवर्तते । त्रिरेव पुरोडाशधानाशेषान् ॥ ५ ॥

---

क. " केवलमन्थेडापक्षेऽपि सर्वेभ्यो धानादिभ्यो हविर्भ्यो यजमानभाग अवदेयः । पूर्वार्द्धाच्च यजमान-भाग " इति विशेषप्राप्तत्वादिति ॥

ख. परिषेचनप्रतिषेधेन पुनः कुम्भोपादानं कर्तव्यमित्यवगम्यते । अन्यथा कुम्भनिधानविधानादेव हस्ते जलाभावेन परिषेचनस्य प्रसक्त्यभावात् अप्रसक्तस्य प्रतिषेधो न युक्त इति ॥

ग. अयमेव भाष्यकाराभिमतःपक्षः ।

**हविश्शेषान्संप्लोम्नाय पिण्डान्कृत्वा तिसृषु स्रक्तिषु निदधाति पूर्वस्यां दक्षिणस्यामपरस्यामिति। एतत्ते ततासौ ये च त्वामन्वित्येतैः प्रतिमन्त्रम् ॥**

संप्लोम्नाय विलोड्य। उपयुक्तो मन्थ इति। उदकेन पिण्डाः [क]क्रियन्ते। त्रयो वेदिकोणाः स्रक्तयः पूर्वाद्याः। तासु स्थापयति ॥ ६ ॥

**त्रीन्परान्पितॄनन्वाचष्टे। षष्ठं प्रथमे पिण्डे। पञ्चमं द्वितीये। चतुर्थं तृतीये ॥ ७ ॥**

परे पितरः [ख]षष्ठपञ्चमचतुर्थाः। नित्यानुक्त्वा तानन्वाचष्टे। तान्पश्चादुच्चारयति। न [ग]तेषां नामानि गृह्यन्ते षष्ठादारभ्य। तस्मादातृतीयात्पुरुषान्नाम न गृह्णन्तीति। एतत्ते तत देवदत्त प्रपितामहस्य प्रपितामह। ये च त्वामन्विति पूर्वस्याम्। एतत्ते पितामह रुद्रदत्त पितामहस्य प्रपितामह। ये च त्वामन्विति दक्षिणस्याम्। एतत्ते प्रपितामह विष्णुदत्त प्रपितामहस्य तत। ये च त्वामन्विति अपरस्याम् ॥ ७ ॥

**उत्तरस्यां स्रक्त्यां रिप्तलेपं निमृज्यात्र पितरो यथाभागं मन्दध्वमित्युक्त्वोदञ्चो निष्क्रम्य सुसन्दृशं त्वा वयमित्यैन्द्यर्चाऽऽहवनीयमुपतिष्ठन्त ऐन्द्रीभ्यां वा ॥ ८ ॥**

रिप्तलेपं रिप्तस्य हस्तस्य लेपं निमृज्योत्तरस्यां स्रक्त्यां "अत्र पितर" इत्युक्त्वा यजमान उदङ् निष्क्रामति सह ऋत्विग्भिः ॥ ८ ॥

**आतमितोरुपस्थायाक्षन्नमीमदन्त हीति पङ्क्त्या गार्हपत्यमुपतिष्ठन्ते ॥ ९ ॥**

[घ]आहवनीयगार्हपत्योपस्थानं च। आतमितोराहवनीयोपस्थानम्। यावदुच्छ्वासो

---

क. हविश्शेषानुपमर्द्य चूर्णीकृत्य जलेन संयुत्य पिण्डान्कुर्यादिति।

ख. प्रपितामहस्य प्रपितामहपितामहपितरः षष्ठपञ्चमचतुर्थाः परे पितरः।

ग. रुद्रदत्तस्तु नाम्नैव ग्रहणं तेषां स्वामिमतं कथयति। See p. 76.10. आप. श्रौ. Vol. II., A.S.Ed.

घ. प्राकृताहवनीयस्यैवोपस्थानम्। न तत्कार्यापन्नस्य वेदिमध्यगतस्य...स्यैवास्मै तद्‌ध्रुवते। यत्तस्याहवनीये। अथान्यत्र चरन्ति" इति (तै. ब्रा. १.६.१०.८.) आहवनीयान्तरे निन्दाश्रवणात्। अत एव पितृयज्ञे वेदिमध्यस्थे आहवनीये कार्यान्तरकरणेऽपि प्राकृताहवनीयस्यापि धारणं तत्रैव चाग्निहोत्रहोम इत्यादि वेदितव्यम्।

जायते । [क]उपदेशो " हरी " इत्यभ्यस्य आतमितोरुपतिष्ठन्त इति । यदा त्वैन्द्रीभ्यां तदा अक्षन्नमीमदन्त हीति पुनश्च गार्हपत्येऽपि प्रयोगः । छन्दोज्ञानं कर्माङ्गं यत्रोपदिश्यते तत्र । अन्यत्रापि [ख]ऋषिदेवताछन्दोज्ञाने फलोत्कर्षः ॥ ९ ॥

**[ग]एतयैव परिश्रितं प्रविशन्ति ॥ १० ॥ अत्रैके भक्षणपरिषेचने समामनन्ति ॥ ११ ॥**

प्रविश्य वा परिश्रितम् । मन्थस्यावघ्रेण भक्षणं वेदिपरिषेचनं च ॥ १०–११ ॥

**अवघ्रेण सर्वभक्षाः ॥ १२ ॥**

सर्वे भक्षा अवघ्रेण प्राशित्रावान्तरेडायजमानभागानाम् । न हविश्शेशभक्षः । पिण्डार्थत्वात् । न चतुर्द्धाकरणं मन्थस्येडार्थत्वात् । यदाप्येकदेवत्यं पङ्क्त्या गार्हपत्योपस्थानान्तं समानम् ॥ १२ ॥

**आञ्जनादि पिण्डपितृयज्ञवदापङ्क्त्याः ॥ १३ ॥**

**यदन्तरिक्षमिति पङ्क्त्या पुनरेति ॥ १४ ॥**

**विस्रस्य प्राचीनावीतानि यज्ञोपवीतानि कुर्वते ॥**

**विपरिक्रामन्त्यृत्विजः परिहरन्ति स्रुचः ॥ १५ ॥**

**अपकर्षन्ति परिश्रयणानि ॥ १६ ॥**

पिण्डपितृयज्ञवत् अञ्जनादि । अपनीतेषु परिश्रयणेषु इदं यजमानस्येत्युक्त्वा परिहृत्य च [घ]वेदेनाऽन्वाहार्यदानादि ॥ १३–१६ ॥

**औपभृतं जुह्वामानीयापबर्हिषावनूयाजौ यजति । देवौ यजेति प्रथमं संप्रेष्यति । यजेत्युत्तरम् ॥ १७ ॥**

---

क. " सुसन्दृशं त्वा वयं " इति मन्त्रान्तर्गतं " हरी " इति पदमभ्यस्यन्त एवाहवनीयसमीपे आतमितोस्तिष्ठेयुः । सूत्रे " ऐन्द्र्याऽऽहवनीयमुपतिष्ठन्त " इति वचनात् यावदुच्छ्वासं मन्त्रावृत्तिप्रतीतेरिति ।

ख. यो ह वा अविदितार्षेयच्छन्दोदैवतेन मन्त्रेण यजते याजयति वाध्यापयति वा स पापीयान्भवति गर्तं वा पद्यते प्र वा मीयते " इति तदनुज्ञातुर्निन्दाश्रवणात् याजनेऽपि ऋषिदेवताज्ञानमावश्यकमधिकफलदं वेति ज्ञेयम् ।

ग. एतयैव " अक्षन्नमीमदन्त हि " इत्यनयर्चा ।

घ. चतुर्द्धाकरणाभावेऽपि इदं यजमानस्येति यजमानभागनिर्देशात् यजमानभागं वेदेन परिहृत्य ततोऽन्वाहार्यदानादिकं कर्तव्यमिति ॥

देवान्यजेति सर्वार्थत्वाद्देवावित्यूहः । [क]उत्तरयोर्द्वियजत्वात् यज यजेति ॥ १७ ॥

**सूक्तवाकं प्रति निवीतानि कुर्वते ॥ १८ ॥**

निवीतमवलम्बितं ग्रीवायां सूक्तवाकप्रैषादि । [ख]यज्ञोपवीतं शंयुवाकादि ॥ १८ ॥

**न पत्नीः संयाजयन्ति ॥ १९ ॥**

संस्रावान्ते प्रक्षाल्य लेपान्गार्हपत्यदेशं गच्छत्यध्वर्युः । पत्नीस्संयाजयिष्यन्तः प्रत्यञ्चो यन्तीति तदर्थत्वाद्गमनस्य । होताऽऽग्नीध्रश्च न गच्छतः । [ग]स्रुचोस्सादनं प्रोहनं च कार्यम् । सम्पत्नीयदक्षिणाग्निहोमाश्चेति । अपत्नीसंयाजाङ्गत्वादेषाम् । [घ]पत्न्यभावात् स न (प्रासन)निवृत्तिः । स्तरणमेव वेदस्य ॥

**न समिष्टयजुर्जुहोति ॥ २० ॥**

हुतेषु प्रायश्चित्तेषु ध्रौवसमाप्तिः । [ङ]अभावेऽपि समिष्टयजुषः कालमात्रत्वाद्बर्हिषः प्रहरणम् ॥ २० ॥

**सर्वमन्यत्क्रियते ॥ २१ ॥ सन्तिष्ठते पितृयज्ञः ॥ २२ ॥**

---

1. C. Adds. न चतुर्थः ।

क. प्रकृतौ प्रथमानूयाजे "देवान्यज" इत्युक्त्वा द्वितीयतृतीययोः 'यज यज" इत्येव पठनीयमिति विहितम् । तत्र देवान्यज प्रथमः प्रैषः अनूयाजत्रयस्यापि कृतो द्वितीयतृतीयौ प्रातिस्विकौ । एवं द्वितीयतृतीययोरनूयाजयोः सामान्येनैकः प्रातिस्विकेनैक इति यजद्वयं प्राप्तम् । अत्र "अपबर्हिषौ" इति प्रथमस्य बाहरनूयाजस्य निषिद्धत्वात् द्वितीयानुयाजारम्भ एव देवौ यजेत्यूहेन प्रैषः कार्यः । स चोभयोः समानः । तदनन्तरं पुनः "यज" इत्येकवारं प्रैषो देयः । तृतीयस्य तु तदारम्भे यज-इति सकृदेव । एवं च "देवौ यज यज" इति द्वितीयस्य प्रैषः । यज इत्येव तृतीयस्येति ॥

ख. अजिनं वासो वा दक्षिणत उपवीय दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतं एतदेव विपरीतं प्राचीनावीतं संवीतं मानुषम् । इति (तै. आ. २.१.१.) श्रुतिरत्रानुसन्धेया ॥

ग. एतदर्थं प्रत्यग्गमनमध्वर्योरावश्यकमिति । सम्पत्नी पत्या सुकृतेन गच्छतामिति मन्त्रेण पत्न्य-न्वारब्धेनाध्वर्युणा गार्हपत्ये क्रियमाणो होमः सम्पत्नीयहोमः ॥

घ. पत्न्या उपस्थे होत्रा क्रियमाणं वेदप्रासनं पत्न्या असन्निधानान्नास्तीति । किन्तु वेदस्य वेद्यां स्तरणं यद्विहितं हौत्रस्य कर्मणोऽन्ते तत्कर्तव्यम् ।

ङ. प्रकृतावन्तर्वेद्यूर्ध्वस्तिष्ठन् ध्रुवया समिष्टयजुर्जुहोति । मध्यमे स्वाहाकारे बर्हिरनुप्रहरति (आप. श्रौ. ३-१३.२.३.) इति.

यजमानभागप्राशनम् । वेद्यभिस्तरणादि ब्राह्मणभोजनान्तं प्रकृतिवत् । कपालैस्सह भर्जनार्थस्योद्वासनम् । वेदेरेव दक्षिणाप्राचीत्वम् । प्रकृतिवदन्यत् । सूत्रकारवचनात् । प्राञ्चि कर्माणि । दक्षिणाप्राञ्चीति केचिदन्यमतम् ॥

॥ इति षोडशी कण्डिका ॥

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृतेऽष्टमे प्रश्ने चतुर्थः पटलः समाप्तः ॥

## पञ्चमः पटलः

**प्रतिपूरुषमेककपालान्निर्वपति यावन्तो यजमानस्यामात्याः सस्त्रीकास्तावत एकातिरिक्तान् ॥ १ ॥**

पुरुषं पुरुषं प्रति प्रतिपुरुषम्। प्रतिपुरुषवचनाद्यजमानपत्नीनामेककपालाः। [क]प्रजा श्रुतेस्तदपत्यानामेव केचित्। बहुत्वश्रुतेरनपत्यस्यापि त्रयः। [ख]विहरणादि तूष्णीम्। येन पुरोडाशसिद्धिः ॥ १ ॥

**यावन्तो गृह्यास्तेभ्यः कमकरमिति निरुप्यमाणेषु यजमानो जपति ॥ २ ॥**

निरुप्यमाणेष्विति लिङ्गाद्वैदिकपुरोडाशसिद्धिः। लोके निर्वपणाभावाद्वैदिकैः कर्मभिः पुरोडाशसिद्धिः ॥ २ ॥

**तूष्णीमुपचरिता भवन्ति ॥ ३ ॥**

अग्न्यन्वाधानादि परिस्तरणादि वेदः पाणिप्रक्षालनादि स्रुवो वेदः पात्री आज्यस्थाली पक्षे प्रणीताप्रणयनम्। अश्मोपवेष इति पुरतः। आप्यलेपनिनयनान्ते आज्यनिर्वापः। अङ्गारप्रोहनं च ॥ ३ ॥

**उत्तरार्द्धे गार्हपत्यस्याधिश्रयति ॥ तानभिघार्यानभिघार्य वोद्वास्यान्तर्वेद्यासाद्य पशूनां शर्मासीति मूते समावपति ॥ ४ ॥**

उत्तरार्द्धे प्रागपवर्गानधिश्रयति प्रथमकमश्चोत्तरेषु पदार्थेषु। उद्वास्यासादनमसंस्कृतायां वेद्याम् ॥ ४ ॥

**मूतयोर्मूतेषु वा ॥ ५ ॥**

मूतो मूतकः तृणमयः। तत्रैतान्समावपत्यभिज्ञातं कृत्वा द्वयोर्बहुषु वा ॥ ५ ॥

**कोशापिधानेन हरन्तीत्येकेषाम् ॥ ६ ॥**

---

क. एतदर्थवादे "जाता एव प्रजा रुद्रान्निरवदयते" (तै. ब्रा. १. ६. १०, १) इति प्रजासम्बन्धित्वेन श्रवणात् यजमानस्य यावत्यः प्रजाः पुत्रपौत्रादयः स्त्रीपुंसाविशेषेण तावत्संख्याकाः पुरोडाशा इति केचिदभिप्रयन्ति।

ख. यथा पुरोडाशश्रपणादिकं सम्पाद्येत तथा प्राकृते विहारे आहवनीयादीन्तूष्णीं प्रज्वालयेदित्यर्थः ॥

कोशः पेटकः। तस्यापिधानं स्थगनम्। तस्मिन्वातात्समोप्य पशूनां शर्मासीति हरति॥ ६॥

**एक एव रुद्रो न द्वितीयाय तस्थ इति दक्षिणाग्नेरेकोल्मुकं धूपायद्धरति॥ ७॥**

एकं च तदुल्मुकं च। असंसृष्टमन्यैः एकोल्तुकम्। तज्ज्वलद्धूमसंयुक्तं हरति॥ ७॥

**उत्तरपूर्वमवान्तरदेशं गत्वाखुस्ते रुद्र पशुरित्याखूत्कर एकं पुरोडाशमुपवपति॥ ८॥**

उत्तरपूर्वो यः कोणदेशः तत्र य आखूत्करः तत्र पुरोडाशं स्थापयति आखुस्ते रुद्र पशुरिति यस्य नास्ति द्वेष्यः॥ ८॥

**असौ ते पशुरिति वा द्वेष्यं मनसा ध्यायन्॥ ९॥**

देवदत्तस्ते पशुरिति यश्शत्रुवधमिच्छति स एनं मनसा ध्यायन्स्थापयति॥ ९॥

**यदि न द्विष्यादाखुस्ते पशुरिति ब्रूयात्॥ १०॥**

यः सन्तमपि न द्वेष्टि तस्याखुस्ते पशुरिति स्थापनम्॥ १०॥

**चतुष्पथ एकोल्मुकमुपसमाधाय संपरिस्तीर्य सर्वेषां पुरोडाशानामुत्तरार्द्धात्सकृत्सकृदवदाय मध्यमेनान्तमेन वा पलाशपर्णेन जुहोति॥ ११॥**

चतुष्पथो यत्र चत्वारः पन्थानः सङ्गच्छन्ते उत्तरपूर्व एव तत्रोल्मुकं प्रतिष्ठाप्योपसमाधाय बलवन्तं कृत्वा परिस्तीर्य दर्भैः सर्वपुरोडाशानामुत्तरार्द्धाद्गृहीत्वा पलाशपर्णेन जुहोति। [क]द्विपत्रिकं पलाशपर्णं नेष्यते मध्यमान्तिमनियमात्॥ ११॥

॥ इति सप्तदशी कण्डिका॥

**एष ते रुद्र भागः सह स्वस्राम्बिकया तं जुषस्व स्वाहेति भेषजं गव इत्येताभ्यां चातुष्पथमग्निं परिषिञ्चति। अवाम्ब रुद्र मदिमहीति यजमानो जपति॥ १॥**

---

क. यस्मिन्दले द्वे एव पत्रे स्तः तद् द्विपत्रिकम्। मध्यमेनान्तमेन वेति नियमात् यस्मिन्दले प्रथमं मध्यमं अन्तिमं पत्रत्रयमस्ति तस्मादेव दलादन्तिमं वा पत्रं ग्राह्यमिति॥

"भेषजं[क] गव" इति गायत्री त्रिपदा। सुभेषजमिति च द्विपदा गायत्री। समन्ततोऽपां स्रावणम्। अन्तरः परिस्तरणानां परिषेकः। अवाम्ब इति व्यवसाययादित्येवमन्तः ॥ १ ॥

**त्र्यम्बकं यजामहे इति त्रिः प्रदक्षिणमग्निं परियन्ति ॥ २ ॥**

अग्निं परियन्त्यमात्याः सयजमानपत्नीकाः ॥ २ ॥

**[ख]त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम्। उर्वारुकमिव बन्धनादितो मुक्षीय मा पतेरिति यजमानस्य पतिकामा परीयात् ॥ ३ ॥**

यजमानामात्येषु या स्वप्रत्ता सा पतिकामा। तस्या एव मन्त्रः ॥ ३ ॥

**ऊर्ध्वान्पुरोडाशानुदस्य प्रतिलभ्य त्र्यम्बकं यजामहे इति यजमानस्याञ्जलौ समोप्य भग स्थ भगस्य वो लप्सीयेत्यपादायैतेनैव कल्पेन त्रिःसमावपेयुः ॥ ४ ॥**

उदसनमुत्क्षेपः। ऊर्ध्वानां पुरोडाशानां प्रतिलभ्य पुनर्गृहीत्वा [ग]परिगमनमन्त्रेणैव यजमानस्याञ्जलौ क्षिपन्ति। पुनश्च स्वान्गृह्णन्ति। भग स्थेति ग्रहणमन्त्रेण व्यवायान्मन्त्रावृत्तिः ॥ ४ ॥

**[घ]पतिकामा याश्चैवं समावपेयुस्तथैव मन्त्रं संनमयित्वा ॥ ५ ॥**

पतिं कामयन्त इति पतिकामाः याःकन्याः। यजमानापत्यं ताश्च यजमानहस्ते क्षिपेयुः पुरोडाशान्। यःपरिगमनमन्त्रः तासां तेनैव ॥ ५ ॥

---

क. भेषजं गवेऽश्वाय पुरुषाय भेषजम्। अथो अस्मभ्यं भेषजम्। इति त्रिपदा प्रथमा गायत्री। सुभेषजं दधासति। सुगं मेषाय मेष्यै इति द्विपदा द्वितीयेति।

ख. मन्त्रोऽयं शुक्लयजुर्वेदीयः। या काचित्पतिकामा कन्या। पर्येतीत्येकं मतम्। यजमानस्यैव कन्या या पतिकामा सेत्यपरम्। See. भा. श्रौ. "यस्य कस्यचित्पतिकामा स्यादित्येकम्। यजमानस्येत्यपरम्" इति

ग. "त्र्यम्बकं यजामहे" इति प्रथम इतरेषां परिगमनमन्त्रः। एकैक एकैकं पुरोडाशमादाय तमुपर्याकाशे क्षिपेत्। आकाशात्पतन्तं च तं पुरोडाशं स्वेनोत्क्षिप्तं गृह्णीयात्। गृहीत्वा तं त्र्यम्बकमन्त्रेण प्रथमेन यजमानहस्ते समावपेत्। ततस्तं "भग स्थ" इति पुनर्गृह्णीयात्। पुनश्च त्र्यम्बकमन्त्रेण तं यजमानहस्ते समावपेत्। पुनर्गृह्णीयात्। पुनश्चैवमिति वारत्रयं समन्त्रकं समावपनं ग्रहणं चेति ॥

घ. अत्र सूत्रगतं "पातिकामा या" इति पदद्वयं प्रथमाबहुवचनान्तं मत्वा भाष्यकारेण व्याख्यातम्। रामाण्डारेण तु "पतिकामायाः" इत्येकं पदं षष्ठ्यन्तं मत्वाऽपि व्याख्यान्तरं कृतम्। तमेव द्वितीयंपक्षमन्वसरन् रुद्रदत्तो भारद्वाजसूत्रमुदाहरत् see आप. श्रौ. II,· Vol. p. 82, A. S. Edn. तत्र प्रथमपक्षे कन्याभिरेव यजमानहस्ते पुरोडाशावपनम्, द्वितीयपक्षे कन्याहस्तेऽन्यैरिति वेदितव्यम्।

**परीत्य परीत्य समावपन्तीत्येके ॥ ६ ॥**

यदा परीत्य परीत्य क्षेपः तदा व्यवायात् परिगमनमन्त्रस्यावृत्तिः ॥ ६ ॥

**तान्मूते समावपति मूतयोर्मूतेषु वा ॥ ७ ॥**

यदापि कोशापिधानेनानीताः तदापि मूते क्षेपः ॥ ७ ॥

**एष ते रुद्र भाग इति वृक्ष आसजति वृक्षयोर्वृक्षेषु वा ॥ ८ ॥**

वृक्षासञ्जने वृक्षे लम्बयत्यध्वर्युः । एष ते रुद्रभागस्तं जुषस्वातीमन्तेन ॥ ८ ॥

**अपि वा मूतयोः समोप्य विवधं कृत्वा शुष्के स्थाणौ वल्मीकवपायां वावधायावततधन्वा पिनाकहस्तः कृत्तिवासोमिति त्रिरवताम्यन्ति ॥ ९ ॥**

विवधः शिक्यद्वयान्तर्दण्डः । तस्यान्तयोर्मूते बध्वा शुष्कवृक्षछेदे स्थाणौ स्थापयति । वल्मीकवपा वम्रीभिरुद्धता मृत् । अवततधन्वेत्युक्त्वाऽवताम्यन्ति । निरुच्छ्वासास्तिष्ठन्ति । सहर्त्विग्भिःस्त्रियश्च । मन्त्रावृत्तिः [क]प्रत्यक्षोपकारात् । उपदेशः प्रणवान्तमभ्यस्यन्तस्तिष्ठन्तीति ॥ ९ ॥

**अपः परिषिच्याप्रतीक्षास्तूष्णीमेत्यैधोऽस्येधिषीमहीत्याहवनीये समिध आधायापो अन्वचारिषमित्युपतिष्ठन्ते ॥ १० ॥**

[ख]परिषेकमध्वर्युः करोति । उपस्थानं परं सामात्यास्सर्वे । बहुवचननिर्देशात् । [ग]परिगमनसमावापौ स्वमात्यानामेव पुरोडाशसम्बन्धात् । केचिद्यजमानपत्नीवर्जानां तदमात्यानामेव । चातुर्मास्येषु "यजमानस्यामात्या" इति षष्ठीनिर्देशात् । "प्रजा वरुणपाशान्मुञ्चति । प्रजा रुद्रान्निरवदयत" इति लिङ्गात् । अप्रतीक्षाः नेक्षन्ते । अतो यत्र होमः कृतः

---

क. मन्त्रोच्चारणस्य ग्लानिसाधनत्वस्य प्रत्यक्षतोऽवगमात् यावद् ग्लान्युद्गमः तावद्वारत्रयं मन्त्रावृत्तिः कर्तव्येति ।

ख. "अप्रतीक्षमायन्ति" इति श्रुतावागमने बहुवचननिर्देशात्सूत्रेऽपि...अप्रतीक्षास्तूष्णीमेत्य...उपतिष्ठन्त इति आगमनोपस्थानयोः समानकर्तृकत्वावगमात् उपस्थानं सर्वेषाम् । परिषेचनं परमध्वर्योरेव । "अपः परिषिञ्चति" इति श्रुतावेकवचनश्रवणादिति ।

ग. परिगमनसमावापौ यजमानपत्नीवर्जितानां यजमानपुत्रपौत्रादीनामेव । वरुणप्रघासे यावन्तो यजमानस्यामात्या इति षष्ठीनिर्देशेन यजमानसम्बन्धिनामेव ग्रहणात् । प्रजा वरुणपाशान्मुञ्चतीत्यादिश्रुतावपि तदीयप्रजाया एव पापादिविमोकश्रवणाच्चेति ।

यत्र वा स्थापिताः पुरोडाशास्तूष्णीं वाग्यता आगच्छन्ति। एकैका[क]समित्। [ख]एकवचनात्। न चोह उपस्थाने पत्न्याः। उपदेशः [ग]सहाधानम्। पयस्वत्यग्न आगमं तां मां ससृजेति चोहः ॥ १० ॥

इत्यष्टादशी कण्डिका ॥

**आदित्यं घृते चरुं पूर्ववन्निर्वपति ॥ १ ॥**

[घ]अन्य आदित्यस्याग्निः। पूर्ववत्सप्तदश सामिधेन्यः ॥ १ ॥

**अश्वः श्वेतो दक्षिणा ॥ २ ॥**

दक्षिणापवादः। श्वेतोऽश्वः ॥ २ ॥

**गौर्वा श्वेतः श्वेतन्यङ्गो वा ॥ ३ ॥**

बलिवर्दो वा श्वेतः। यस्यैकाङ्गं श्वेतं स श्वेतन्यङ्गः ॥ ३ ॥

**सिद्धमिष्टिः सन्तिष्ठते ॥ ४ ॥**

आदित्यसमाप्तौ साकमेधसमाप्तिः ॥ ४ ॥

**आग्नावैष्णवमेकादशकपालं निर्वपेच्चक्षुष्कामो बार्हस्पत्यं चरुं ब्रह्मवर्चसकाम ऐन्द्रं पशुकामः सारस्वतं प्रजाकामः पौष्णं प्रतिष्ठाकामः ॥ ५ ॥**

आदित्यस्यानुनिर्वापणमाग्नावैष्णवादीनां सति कामे ॥ ५ ॥

**एतेषां यत्कामयेत्तदनुनिर्वपेत् ॥ ६ ॥**

कामबहुत्वेऽपि एतेषामेकमेव कर्तव्यम्। यदिच्छति ॥ ६ ॥

---

क. "एधोऽस्येधिषीमहि" "समिदसि" "तेजोऽसि" इति समिदाधानमन्त्रे समिद्वाचकपदेष्वेकवचन श्रवणादेकैव समित्।

ख. "अपोऽन्वचारिषꣳरसेन समसृक्ष्महि। पयस्वाꣳअग्न आगमं तं मा सꣳसृज वर्चसा।" इत्युपस्थान मन्त्रः। तत्र पत्न्या "पयस्वत्यग्न" "तां मा" इति चोहो न कर्तव्यः। प्रकृतिभूते सौमिकेऽवभृ अपोऽन्वचारिषमित्युपतिष्ठन्ते (आप. श्रौ. १३. २२. ६) इत्यनूहितस्यैव मन्त्रस्य पत्न्या अ दर्शनात्। इति।

ग. 'समिध आधाय" इति बहुवचनश्रवणात् मन्त्रत्रयमुक्त्वा सहैव समिधां तिसृणामप्याधानम्। ए पयस्वती तां मा इत्यप्यूहः। अन्यथा मन्त्रस्यासमवेतार्थत्वेनादृष्टार्थतापत्तेरित्युपदेशमतम्।

घ. रुद्रदत्तस्तु–तेष्वेवाग्निष्वादित्यं निर्वपतीति लिखति।

सिद्धमिष्टिः सन्तिष्ठते । सन्तिष्ठन्ते साकमेधाः ॥ ७ ॥

अत्र पौर्णमास्येष्ट्वोन्दनादि पूर्ववन्निवर्तनम् । सर्वं वा वापयेत् । मन्त्रादिर्विक्रियते । यो अस्याः पृथिव्यास्त्वचि निवर्तयत्योषधीः । अग्निरीशान ओजसा वरुणो धीतिभिः सह । इन्द्रो मरुद्भिः सखिभिः सह । अग्निस्तिग्मेनेति समानम् ॥ ८ ॥

अत्रास्मिन्कृते पौर्णमास्या यागः । ततो वपनम् ।

इत्येकोनविंशी कण्डिका ॥

इत्यापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिकृतेऽष्टमे प्रश्ने पञ्चमः पटलः समाप्तः

## षष्ठः पटलः

**ततो द्व्यहे त्र्यहे चतुरहेऽर्धमासे मासि चतुर्षु वा मासेषु शुनासीरीयेण यजेत ॥ १ ॥**

[क]ततो वपनानन्तरं द्वितीयेऽहनि द्वितीयायां त्र्यहे तृतीयायाम् । अर्धमासे पर्वणि वपनं कृत्वा अमावास्यायां वपनम् । उपदेशः तथोत्तरस्याम् । शुनासीर इन्द्रो यस्मिन्निति शुनासीरीयम् ।

**तस्य वैश्वदेववत्कल्पः ॥ २ ॥**

[ख]पुनर्वैश्वदेववद्वचनात् अनूयाजेष्वपि वैश्वदेववद्विधिः त्रेधा सन्नहनपृषदाज्यादीनि । द्व्यहकालत्वं शुनासीरीयस्य [ग]वैश्वदेववत् । प्रातर्दोहविकारत्वाच्च पयसः [घ]सद्यस्कालत्वं वा । द्व्यहादौ साङ्गस्यैव विधानात् । [ङ]शाखामाहृत्य न वत्सापाकरणादि सायन्दोहार्थत्वात् । वेदं कृत्वा वेदिः । पलाशप्रशातनादि पर्णवल्कवर्जम् । कुम्भ्यालेपने कृते "इमौ पर्णौ" इति निधाय वत्सापाकरणम् । प्रातर्दोहायापरिस्तरणं देवा देवेष्विति क्रमः । पाणिप्रक्षालनादि ॥ २ ॥

**निर्वपणकाल आग्नेयमष्टाकपालमिति दशोत्तरणि हवींषि निर्वपति ॥ ३ ॥ वायव्यस्य पयसः प्रातर्दोहवत्कल्पः ॥ ४ ॥**

सद्यस्कालेऽपि प्रातर्दोहविधिरेव ॥ ३—४ ॥

---

क. तत इत्यस्य "साकमेधकालात्" इति व्याख्यां करोति रुद्रदत्तः ।
अर्धमासपक्षेऽमावास्याया अनन्तरं साकमेधार्थं वचनम् । ततोऽर्धमासे पौर्णमास्यां शुनासीरीयेणेष्ट्वा ततः पौर्णमासीं प्रकृतीष्टिं कृत्वा वपनमिति ।

ख. "एतद्ब्राह्मणान्येव पञ्च हवीꣳषि" इति श्रुतिवचनबलात् वैश्वदेवं वरुणप्रघाससाकमेधशुनासीरीयाणाम् (आप. ५-३-२६) इति परिभाषावचनाच्च शुनासीरीयस्य वैश्वदेवप्रकृतिकत्वे सिद्धेऽपि पुनरत्र वैश्वदेववत्कल्पः" इति वचनात् अनूयाजेषु अष्टावाद्याः पाशुकाः ।

ग. उत्तमेनोत्तमम् (आप. श्रौ. ९. ३. १. २.) इत्यादीनां धर्माणां प्राप्तिरिति । सूत्रान्तरकारैः कैश्चित् महाहविःकल्पोऽत्रातिदिश्यते । तन्निवृत्त्यर्थं पुनर्वचनमिति रुद्रदत्तः । see A. S. Ed. आप. श्रौ. Vol. II, P. 87.

घ. ततो द्व्यहे त्र्यहे सूत्रेण साङ्गस्य कर्मण एकस्मिन्नेवाहनि विधानावगमाच्च सद्यस्कालत्वमिति ।

ङ. सद्यस्कालपक्षे प्रयोग उच्यते ।

**अथैकेषाम्। पञ्च सञ्चराणि निरुप्य वायव्या यवागूः प्रतिधुग्वेन्द्राय शुनासीराय पुरोडाशो द्वादशकपालः। इन्द्राय शुनासीराय स्रुचा जुहुत नो हविः। जुषतां प्रति मेधिरः। प्रहव्यानि घृतवन्त्यस्मै हर्यश्वाय भरता सजोषाः। इन्द्रर्तुभिर्ब्रह्मणा वावृधानः शुनासीरी हविरिदं जुषस्वेति शुनासीरीयस्य याज्यानुवाक्ये। सौर्य एककपाल इति ॥ ५ ॥**

एकेषां न दश हवींषि। पञ्च सञ्चराणि कृत्वा वायव्या यवागूः [क]शृतपेया चरुवत्। प्रतिधुक् सद्यो दुग्धं पयो लौकिकमशृतम्। एतदेवास्मै शृतं कुरुते लिङ्गात्। आसादनादि सान्नाय्यवत्। सर्वं वा श्रपणवर्जं सान्नाय्यवत्। इन्द्राय शुनासीराय, सौर्य-एककपाल इत्यष्टौ। विश्वे देवा हव्यꣳ रक्षध्वम्। इन्द्र शुनासीर वायो। इदमग्नेः सवितुः पूष्णः, इन्द्राग्न्योः, इन्द्रस्य, सौर्यस्य इदं सोमस्य सरस्वत्याः विश्वेषां देवानाम्। वायवे हविरिन्द्रियम्। वायवे देवेभ्यो हव्यम्।

**नव प्रयाजानूयाजाः ॥ ६ ॥ पञ्च प्रयाजं त्र्यनूयाजमित्येके ॥ ७ ॥ संसर्पोऽस्यंहस्पत्याय त्वेति मासनाम्नैककपालमभिजुहोति। [ख]द्वादशगवं सीरं दक्षिणा ॥ ९ ॥**

सीरं लाङ्गलं द्वादशभिर्बलीवर्दैः युक्तम्। तस्य प्रतिग्रहः। उत्तानस्त्वेति ॥ ९ ॥

**षड्योगं वा ॥ १० ॥**

षड्योगं षड्भिर्युक्तम् ॥ १० ॥

**उष्टारावित्येकेषाम् ॥ ११ ॥ [ग]उष्टारं वा ॥ १२ ॥**

उष्टारौ प्रासङ्गिकौ धुर्यौ वर्जयित्वा। ब्राह्मणा इदं वः सीरं अयमश्च इति सङ्कल्पयति। एककपालदक्षिणेत्युपदेशः ॥ १२ ॥

---

क. शृता च सा पेया च शृतपेया। यवागूरेव सा व्रीह्यादिभिर्निष्पादनीया। अतस्तत्र निर्वपणादिश्रपणान्तं कर्तव्यम्।

ख. "द्वादशगवं सीरं" इत्यत्र द्वादशभिर्गोभिर्वहनयोग्यं दीर्घं लाङ्गलमित्यर्थः। अतस्सीरमात्रस्य दक्षिणात्वेन दानम्। न तु गोविशिष्टस्य दानम्। अतस्सीरमात्रस्य प्रतिग्रहात् तस्य चाचेतनत्वात् अचेतनप्रतिग्रहे पठनीयः "उत्तानस्त्वा" इत्ययमेवात्र प्रतिग्रहमन्त्र इति।

ग. यौ मुख्यौ प्रधानतया शकटवाहकौ बलीवर्दौ तदपेक्षया भिन्नः प्रासङ्गिकतया यः शकटेनैव सहाऽऽगच्छति स उष्टा।

**अश्वं श्वेतमेककपालस्य गां वा श्वेतम् ॥ १३ ॥**

ब्राह्मणा इदं द्वादशगवं सीरं वो ददामि । अश्वं श्वेतमेककपालस्य वो ददामि बलीवर्दं वा श्वेतम् ॥ १३ ॥

॥ इति विंशी कण्डिका ॥

**अनुवत्सरीणां स्वस्तिमाशास्ते । दिव्यं धामाशास्त इति सूक्तवाकस्याशीःषु होतानुवर्तयते । एवं यजमानो जपति । आशास इति मन्त्रं संनमति । सिद्धमिष्टिः सन्तिष्ठते । सन्तिष्ठन्ते चातुर्मास्यानि ।**

अनुवत्सरो वायुः ॥ १ ॥

**अत्र पौर्णमास्येष्ट्वोन्दनादि पूर्ववन्निवर्तनम् । सर्वं वा वापयेत् । मन्त्रादिर्विक्रियते । एकं मासमुदसृजत्परमेष्ठी प्रजाभ्यः । तानाभ्यो मह आवहदमृतं मर्त्याभ्यः । प्रजामनुप्रजायसे तदु ते मर्त्यामृतम् । येन मासा अर्धमासा ऋतवः परिवत्सराः । येन ते ते प्रजापत ईजानस्य न्यवर्तयन् । तेनाहमस्य ब्रह्मणा निवर्तयामि जीवसे । अग्निस्तिग्मेनेति समानम् ॥ २ ॥**

पौर्णमास्येति पाक्षिकम् । कथं द्यहादावनिष्ट्वाऽपि वपनम् ॥ २ ॥

**चातुर्मास्यैरिष्ट्वा सोमेन पशुना वा यजेत ॥ ३ ॥**

[क]चातुर्मास्यैरिष्ट्वेति समुदायप्रयुक्तो वैकस्य पर्वणः प्रयोगे भवति ।

वैमृधवत् । सोमोऽग्निष्टोमतुल्यः तत्प्रकृतित्वात् । चातुर्मास्याङ्गम् । अनेन न मुच्यत ऋणात् । न चाऽत्र कामः । तथा पशुबन्धो निरूढतुल्यः । न निरूढार्थं साधयति ॥ ३ ॥

---

क. चातुर्मास्यैरिति बहुवचननिर्देशात् सर्वपर्वाङ्गत्वमत्रगम्यते । अतस्संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति इति वैमृधेष्टिः पौर्णमासहविस्त्रयाङ्गं एवमत्र पशुयागः सोमयागश्च पर्वचतुष्टयाङ्गं तदन्त एवानुष्ठातव्यम् । नैकस्य पर्वणः समाप्तौ । अयं सोमयागो न प्रकृतिभूतोऽग्निष्टोमः । किन्तु तद्विकृतिभूतं तत्तुल्यं सोमयागान्तरम् । अतो नायं जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते इत्यादिनावबोधितर्णापाकरणार्थः । अन्याङ्गत्वात् । अत एव च फलार्थमपि नानुष्ठानमस्य । अङ्गानां स्वतन्त्रफलार्थत्वाभावात् । एवमेव नायं नित्यो निरूढपशुबन्धाख्यः पशुयागः । चातुर्मास्याङ्गभूतस्य तद्विकृतिभूतः कश्चिद्धर्मकः नानेन वार्षिकपशुयागसिद्धिरिति । रुद्रदत्तस्तु "अग्निं चित्वा सौत्रामण्या यजेत" इति प्रसिद्धस्यैवाग्निष्टोमस्य प्रसिद्धस्यैव निरूढपशोः चातुर्मास्याङ्गत्वेनापि विधाने बाधकाभावं मन्वानः तत्तामेवोभयोस्साधयति । ( see page 88. आप. श्रौ. Vol. II. A. S. Ed. )

**फाल्गुन्या उद्वृष्टे सोमाय यजेत ॥ ४ ॥**

उद्वृष्टः शुक्लपक्षः । [क]फाल्गुन्याः परो यश्चैत्रश्शुक्लः तदादौ सोमाय दीक्षते । केचित्फाल्गुन्या अर्वाग्यः फाल्गुनीशुक्ल एव परसंवत्सरे तदापीति । प्रदर्शनं चैतत् । [ख]यस्य चैत्र्यां परिसमाप्तिः तस्य चैत्र्या अपि परः शुक्ल इति । पशुस्त्वनन्तरमपर्वणीत्युपदेशः । अनन्तरे पर्वणीति न्यायः । सर्वाङ्गत्वात् ॥ ४ ॥

**तं ततो नानीजानमपरा फाल्गुनी पर्यवेयात् ॥ ५ ॥**

यद्यपि न सम्पद्येत । अनीजानमनिष्टवन्तम् । सोमेन पशुना वा अपरिसमाप्ते यागे आगामिनी फाल्गुनी चैत्री वा द्वितीया नातिक्रामेत् । अतिक्रमे कालस्य सर्वप्रायश्चित्तम् । [ग]केचित्पशुकालातिक्रमे दर्शपूर्णमासप्रकृतित्वात् पथिकृद्वैश्वानरावग्निहुतं च कुर्वन्ति ॥ ५ ॥

**इति वै खलूत्सृजमानस्य ॥ ६ ॥**

[घ]उत्सृजमानः यो न पुनर्यजते चातुर्मास्यैः तस्य सोमः पशुर्वा ॥ ६ ॥

**अथ पुनरालभमानस्य फाल्गुन्याश्चतुर्दश्यां शुनासीरीयेणेष्ट्वा ॥ ७ ॥**

॥ इत्येकविंशी कण्डिका ॥

**पञ्चदश्यां वैश्वदेवेन यजेत ॥ १ ॥**

---

क. फाल्गुन्यां चैत्र्यां वा वैश्वदेवेन यजेतेत्युक्तम् । तत्र फाल्गुन्यामारभ्य चतुर्षु चतुर्षु मासेष्वेकैकं पर्व इत्येकः पक्षः । अस्मिन्पक्षे साकमेधपर्वणः कार्तिक्यामनुष्ठाने कृते ततश्चतुर्षु मासेषु द्वितीयवर्षस्य फाल्गुनी प्राप्नोति । तस्यां शुनासीरीयमनुष्ठाय तदनन्तरं कृष्णपक्षं व्यतीत्य तदनन्तरस्मिन्शुक्लपक्षे सोमयागार्थं दीक्षित्वा तदनन्तरस्मिन् चैत्रे पर्वणि तेन यजेतेति । फाल्गुन्याः पूर्वः शुक्लपक्षः तत्रैव दीक्षेतेति केचित् ॥

ख. यस्य चैत्र्यां वैश्वदेवारम्भः तस्यागामिन्यां चैत्र्यां शुनसीरीयः । तदनन्तरवैशाख्यां सोमयागः ।

ग. पशुकालातिक्रम इत्युपलक्षणं सोमयागकालातिक्रमस्यापि । एवं दर्शपूर्णमास इत्युपलक्षणं ज्योतिष्टोमस्यापि । अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां पौर्णमासीं वाऽतिपातयेत् ( तै. सं. २.२.२.१. ) इति पथिकृदिष्टिः । वैश्वानरं द्वादशकपालं निर्वपेत् ( तै. सं. २.२.४. ) इति विहिता वैश्वानरेष्टिः । ते उभे अपि ।

घ. चातुर्मास्यानामनुष्ठाने पक्षद्वयम्—पर्वचतुष्टयं तत्तत्काले सकृदनुष्ठायोत्सर्ग एकः पञ्चसंवत्सरादिकालेषु पुनः पुनरावृत्तिः ( see आप. श्रौ. ८-२२-६ ) इत्यपरः । तत्र प्रथमपक्षेण योऽनुतिष्ठति स उत्सृजमानः । तस्यैव पशुयागः सोमयागो वा पर्वचतुष्टयान्तेऽनुष्ठेयाविति ।

पुनर्यो यजेत स पुनरालभमानः पाञ्चसांवत्सरिकादिभिः सकृत्कृतैर्वा [क]कृती भवति चातुर्मास्यैः । पञ्चसांवत्सरिकादिभिर्वा । स करोति फलभूयस्त्वार्थं कृत्वा सङ्कल्पमादौ । [ख]उपदेशस्तु पुनरालभमानस्येति वचनात् द्विरभ्यासो लभ्यते । न समासः । पुनरालम्भनस्य । चतुर्दश्यां चातुर्मास्यानां शुनासीरीयम् । पञ्चदश्यां वैश्वदेवम् । विरममाण एव सोमः ॥ १ ॥

**एतेनैव पशुकामो यजेत यस्मिन्नृतौ भूयिष्ठं गोषु पयः स्यात् ।**

पशुर्वा । एतेनैव वैश्वदेवेन पशुकामः यस्मिन् ऋतावस्य गोषु बहुपयो भवति [ग]प्रावृषि वसन्ते वा । एकस्याऽपि प्रयोगे वैश्वानरपार्जन्यौ पञ्च होता च । न तु सोमः पशुर्वा ॥ २ ॥

**एतेनैव प्रजाकामः पशुकामो वा यजेत ॥ ३ ॥**

प्रजाकामपशुकामस्य [घ]स्वकाले वैश्वदेवमेव ॥ ३ ॥

**अथैकेषाम् । वैश्वदेवेनेतरेषां पर्वणां स्थाने पशुकामो यजेत यावत्सहस्रं पशून्प्राप्नुयात् । अथेतरैः स्वकालैर्यजेत ॥ ४ ॥**

अथैकेषां पशुकामस्य वैश्वदेवाभ्यासो वरुणप्रघासादीनां स्थाने पशुकामस्य [ङ]यावत्सहस्रं पूर्णमिति । पूर्णे वरुणप्रघासादीनि स्वकालानि करोति । यदा त्वपरिसमाप्ते साकमेधकाले शुनासीरीयकाले वा प्राप्यते सहस्रं तदा स्वकाले साकमेधशुनासीरीयाभ्यामिष्ट्वा ।

---

क. कृती कृतकृत्यः । सकृत्कृतैरेव नित्यसिद्धेः तावतैव कृत्यो भवति । फलभूयस्त्वार्थं पाञ्चसंवत्सरादिकाः पक्षाः । चातुर्मास्यारम्भ एव स पक्षः सङ्कल्पे उल्लेखनीयः ।

ख. उपदेशमतं तु नित्यस्यापि द्विरनुष्ठानमावश्यकम् । अथ पुनरालभमानस्येति सूत्रे कामासंयोगेनैव विकल्पश्रवणात् । तत्र चैकस्यैव पुनश्शब्दस्य प्रयोगात् । पञ्चसांवत्सरिकादिपक्षपरिग्रहे पुनः पुनरिति वक्तव्यत्वादिति ।

ग. तयोरन्यतरस्मिन्वर्षर्तौ वसन्तर्तौ वा पशुकामो वैश्वदेवेन यजेत । तत्र वैश्वानरपार्जन्ययोः प्रत्येकाङ्गत्वेन एकपर्वानुष्ठानेऽपि तौ कर्तव्यौ । पशुसोमौ तु न कर्तव्यौ । तयोस्समुदायाङ्गत्वात् ।

घ. पूर्वसूत्रे केवलपशुकामोद्देशविधिः । अत्र तु प्रजाकामपशुकामस्य । अतश्च केवलपशुकामस्य " यस्मिन्नृतौ " इति विधिः । प्रजापशूभयकामस्य तु केवलो वसन्त एव वैश्वदेवस्येति ।

ङ. गवां सहस्रस्य प्राप्ति यावत् पशुकामेन वैश्वदेवमेव पर्व पुनः पुनरावर्तनीयम् । न तु वरुणप्रघासादीनामनुष्ठानम् । गोसहस्रे प्राप्ते सति ततो वरुणप्रघासादीनां स्वकाले यजनम् । न तु वैश्वदेवस्यैवाभ्यसनमिति ।

इतरैरिति वचनादनिष्ट्वैव स्वकाले वैश्वदेवेन, [क]वरुणप्रघासैः स्वकालैरिष्ट्वा विरमतीत्युपदेशः। अथ वा मा भूत्क्रमभेद इति प्राप्तकालैरपि [ख]साकमेधादिभिरनिष्ट्वा वरुणप्रघासैरेव स्वकाले यजत इति ॥ ४ ॥

**शुनासीरीयेण ग्रामकामो वर्ष्य उदके यजेत ॥ ५ ॥**

[ग]वर्ष्य उदके यजेतेति श्रुतिः ॥ ५ ॥

**वर्ष्यमुदकमन्ववसाय तत उदकार्थान्कुरुते ॥ ६ ॥**

अस्यापि विधिः यत्रोदकं वर्ष्यं तत्र गत्वा यजेत। वर्ष्यादेवोदकार्थाः शुनासीरीयस्य ॥ ६ ॥

**एतेनैव प्रजाकामः पशुकामः पुष्टिकामो ब्रह्मवर्चसकामोऽन्नाद्यकामो वा यजेत ॥ ७ ॥**

तस्यैव चोत्तरे कामाः ॥ ७ ॥

**पर्वभिश्चातुर्मास्येषु मासान्संचष्टे ॥ ८ ॥**

पर्वभिश्चातुर्मास्येषु [घ]मासगणना। न [ङ]सावनेन नापि सौरेण। चान्द्रमसैरेव संचष्टे गणयन्ति ॥ ८ ॥

---

क. वरुणप्रघासैः वरुणप्रघाससाकमेधशुनासीरीयैः। एवं च वैश्वदेवमकृत्वैवैभिरेव त्रिभिरिष्ट्वा विरमेदित्युपदेशमतम्।

ख. साकममेधकाले गोसहस्रपूरणे साकमेधशुनासीरयोः स्वस्वकालेऽनुष्ठाने वैश्वदेवानन्तरं वरुणप्रघासाननुष्ठानेन क्रमभङ्गः प्रसज्येत। तदप्रसक्त्यर्थं साकमेधशुनासीरयोः कालप्राप्तावप्यनिष्ट्वैव संवत्सरं यावत् तिष्ठेत्। ततश्च वरुणप्रघासकाल आगते तत्र तेनेष्ट्वा ततः साकमेधशुनासीरीयाभ्यां स्वस्वकाल इष्ट्वा विरमेदितिपक्षान्तरम्।

ग. यत्र वर्षसम्पन्नमुदकमवरुद्धं तडागस्थलादौ तत्र गत्वा यजेतेति।

घ. यस्मिन्पर्वणि वैश्वदेवानुष्ठानं ततो मासगणना। पर्वद्वयमेको मासः। एवमष्टसु पर्वसु गतेषु पर्वान्तरानुष्ठानमिति। न त्रिंशद्दिवसात्मकेन सावनेन न वा सूर्यसङ्क्रान्तिनिमित्तकेन सौरेण वा ग्रहणमिति।

ङ. अयं भावः—पुनरारम्भपक्षे यथावदविकृतमेवानुष्ठानं वर्षद्वयेऽपि। तृतीये वर्षे फाल्गुन्यां पूर्णिमायामेव शुनसीरीयानुष्ठानम्। अनन्तरं मासपर्यन्तं तूष्णीमवस्थानम्। तस्मिन्काले न चातुर्मास्यव्रतानुष्ठानम्। अनन्तरस्यां चैत्र्यां पौर्णमास्यां वैश्वदेवानुष्ठानम्। एवं संवत्सरद्वयमनुष्ठाय ततः सोमेन पशुना वा यष्टव्यमिति।

**पञ्चसांवत्सरिकाणि व्याख्यास्यामः ॥ ९ ॥ त्रीनृतून्संवत्सरा-निष्ट्वा मासं न यजते। द्वौ पराविष्ट्वा विरमति ॥ १० ॥**

ऋतवः संवत्सराः। चतुर्दश्यां शुनासीरीयं पञ्चपश्यां वैश्वदेवमित्यविकृतं सर्वम्। तृतीये तु पञ्चदश्यामेव शुनासीरीयम्। न चान्तराल ( ले? ) व्रतानि मासम्। पौर्णमास्यां वैश्वदेवेनेष्ट्वा पूर्ववत्संवत्सरद्वयम् ॥ ९-१० ॥

**चैत्र्यां तूपक्रम्य द्वाविष्ट्वा मासमनिष्ट्वा त्रीन्परानिष्ट्वा विरमति ॥ ११ ॥**

यदा तु चैत्र्यामारम्भः तदा द्वितीयसंवत्सरे चैत्र्यां शुनासीरीयम्। न चान्तराल-व्रतानि मासम्। यस्यां वैश्वदेवम्। अविकृतानि त्रीणि। एष पञ्चसांवत्सरिको विधिः।

**अथ पञ्चदशवार्षिकाणि। एतान्येव द्विः ॥ १२ ॥**

पञ्चदशवार्षिकाणि। एतान्येव पञ्चसांवत्सरिकाणि कृत्वा पश्चाद् द्विरभ्यासं तेषामेव करोति। ततः पञ्चदश भवन्ति। उपदेश एतान्येव द्विरिति दशापि लभ्यन्ते ॥१२॥

**त्रिरपरिमितं वाभ्यस्येत् ॥ १३ ॥**

त्रिरिति पञ्चदश। अपरिमितं वा न वाऽभ्यासः। नास्ति श्रुतिरभ्यासविधायिकेति केचित् ॥ १३ ॥

**विज्ञायते च स त्रिषु त्रिषु संवत्सरेषु मासं न यजत इत्येत-द्वचनोऽभ्यासः ॥ १४ ॥**

स त्रिषु त्रिषु संवत्सरेषु मासं न यजत इत्येतद्वचनोऽभ्यासः। चातुर्मास्ययाजी त्रिषु त्रिषु पूर्णेषु मासं न यजेत। यान्यन्तरालव्रतानि तानि करोति। तृतीये संवत्सरे फाल्गुन्यामेव शुनासीरीयम्। परस्यां च वैश्वदेवमिति। त्रिषु त्रिष्विति वीप्सावचनं यस्य चातुर्मास्यानामभ्यासः तस्य विधायकम्। तस्य भवत्येतद्वचनम्। चातुर्मास्याभ्यासो वीप्सावचनाद्धि भवति इत्यध्यवसाय चातुर्मास्यानामभ्यासः कर्तव्य इति। अभ्यासं च कुर्वन् त्रिषु त्रिषु संवत्सरेषु मासं परित्यजति। पञ्चसांवत्सरिकाणान्तु प्रत्यक्षा श्रुतिः ॥ १४ ॥

**पञ्चसांवत्सरिकेषु वैश्वानरपर्जन्या पञ्चहोता च नाभ्यावर्तेते। एकोपक्रमत्वात्। यथान्वारम्भणीया यथान्वारम्भणीया ॥ १५ ॥**

पञ्चसांवत्सरिकादिषु वैश्वानरपार्जन्यान्वारम्भणीया पञ्चहोता चाऽऽरम्भार्थत्वात् नाऽऽवर्तते । एकोपक्रमत्वात् । एको ह्यारम्भः पञ्च पञ्चदशापरिमितं वा । यथान्वारम्भणीया दर्शपूर्णमासयोरेक आरम्भो यावज्जीवप्रयोग इति सकृत्क्रियते तद्वदिहाप्युभयं निवर्तते अन्वारम्भणीया पञ्चहोता च आरम्भार्थत्वात् ॥ १५ ॥

॥ इति द्वाविंशी कण्डिका ॥

इति धूर्तस्वामिविरचिते आपस्तम्बश्रौतसूत्रभाष्येऽष्टमप्रश्ने षष्ठः पटलः समाप्तः ॥

अष्टमप्रश्नोऽपि समाप्तः ॥

श्रीः

# अथ हौत्रं पशोः[1]

'अग्नये प्रणीयमानायानुब्रूहि' इत्युक्ते "[1]प्र देवं देव्या" इति सप्रणवमुपांशु त्रिः परिदधाति। "[2]अयमु ष्य" इत्युच्चैः प्राणसन्तानमग्निमनुगच्छति। पश्चात्पाशुबन्धिकाया वेदेस्तिष्ठन्[2] निहितेऽग्नौ "[3]कुलायिनम्" इति प्रतिपद्यते। "[4]त्वं दूत" इति परिधानीयां त्रिः[3]। 'यूपायाज्यमानायानुब्रूहि' इत्युक्ते "[5]अञ्जन्ति त्वा" इति त्रिः।

1. B. Ms. 2. reads पशौ
2. B. Ms. 1. reads तिष्ठन्ति for तिष्ठन्
3. B. 2. reads परिधानीया and omits त्रिः

१ प्र देवं देव्या धिया भरता जातवेदसम्। हव्या नो वक्षदानुषो३म्॥

२ अयमु ष्य प्र देवयुर्होता यज्ञाय नीयते।
रथो न योरभीवृतो घृणीवाञ्चेतति त्मना॥
अयमग्निरुरुष्यत्यमृतादिव जन्मनः।
सहसश्चित्सहीयान्देवो जीवातवे कृतः॥ (ऋ. सं. १०.१७६.३.४.)
इडायास्त्वा पदे वयं नाभा पृथिव्या अधि।
जातवेदो निधीमह्यग्ने हव्याय वोळ्हवे॥
अग्ने विश्वेभिस्स्वनीक देवैरूर्णावन्तं प्रथमस्सीद योनिम्॥

३ कुलायिनं घृतवन्तꣳ सवित्रे यज्ञं नय यजमानाय साधु।
सीद होतस्स्व उ लोके चिकित्वान्त्सादया यज्ञं सुकृतस्य योनौ॥
देवावीर्देवान् हविषा यजास्यग्ने बृहद्यजमाने वयो धाः।
नि होता होतृषदने विदानस्त्वेषो दीदिवाꣳ असदत्सुदक्षः॥
अदब्धव्रतप्रमतिर्वसिष्ठस्सहस्रंभरश्शुचिजिह्वो अग्निः॥ (तै. सं. ३.५.११

४ त्वं दूतस्त्वमु नः परस्पास्त्वं वस्य आ वृषभ प्रणेता।
अग्ने तोकस्य नस्तने तनूनामप्रयुच्छन्दीद्यद्बोधि गोपाः॥

५ अञ्जन्ति त्वामध्वरे देवयन्तो वनस्पते मधुना दैव्येन।
यदूर्ध्वस्तिष्ठा द्रविणेह धत्ताद्यद्वा क्षयो मातुरस्या उपस्थे॥
उच्छ्रयस्व वनस्पते वर्ष्मन् पृथिव्या अधि।
सुमिती मीयमानो वर्चो धा यज्ञवाहसे॥
समिद्धस्य श्रयमाणः पुरस्ताद्ब्रह्म वन्वानो अजरꣳ सुवीरम्।
आरे अस्मदमतिं बाधमान उच्छ्रयस्व महते सौभगाय॥

तृतीयाया अर्द्धर्चे विरम्य[1] 'उच्छ्रीयमाणायानुब्रूहि' इत्युक्ते "[1]ऊर्ध्व ऊ षु ण" इति प्रतिपद्यते। सर्वत्रार्द्धर्चे विरमणम्। "समर्य आविदथे वर्द्धमानः" इति विरम्य 'परि-वीयमाणायानुब्रूहि' इत्युक्ते "[2]पुनन्ति धीरा" इति प्रतिपद्यते। "[3]युवा सुवासा" इति परिधानीयां[2] त्रिः। उपविष्टेनाञ्जनादि। 'मथ्यमानायानुब्रूहि' इत्युक्ते "[4]अभि त्वा" इति त्रिः "समीधे दस्युहन्तमम्" इति विरम्य 'जातायानुब्रूहि' इत्युक्ते "[5]धनञ्जयम्" इति प्रतिपद्यते। "न बिभ्रति" इति विरम्य 'प्रह्रियमाणायानुब्रूहि" इत्युक्ते "[6]विशामग्निम्" इति प्रतिपद्यते। "[7]यज्ञेन यज्ञम्" इति परिधानीयां[3] त्रिः। मन्थनादुत्थितोऽपरेण [4]श्रोणीं

---

1. B. 2. reads विरमति
2. B. 2. reads only परिधानीया
3. B. 1. reads परिधानीया त्रिः
4. श्रोणी इति क

१ ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता।
ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे॥
ऊर्ध्वो नः पाह्यंहसो निकेतुना विश्वं समत्रिणं दह।
कृधी न ऊर्ध्वा चरथाय जीवसे विदा देवेषु नो दुवः॥
जातो जायते सुदिनत्वे अह्नां समर्य आ विदथे वर्द्धमानः॥

२ पुनन्ति धीरा अपसो मनीषा देवया विप्र उदियर्ति वाचम्॥

३ युवा सुवासाः परिवीत आगात्स उ श्रेयान् भवति जायमानः।
तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः॥

४ अभि त्वा देवसवितरीशानं वार्याणाम्। सदावन्भागमीमहे॥
मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्। पिपृतां नो भरीमभिः॥
त्वामग्ने पुष्करादथर्वा निरमन्थत। मूर्ध्नो विश्वस्य वाघतः॥
तमु त्वा दध्यङ्ङृषिः पुत्र ईधे अथर्वणः। वृत्रहणं पुरन्दरम्॥
तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम्॥

५ धनञ्जयं रणे रणे। उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाऽजनि।
धनञ्जयो रणे रणे। आयं हस्तेन खादिनं शिशुं जातं न बिभ्रति॥

६ विशामग्निं स्वध्वरम्। प्र देवं देववीतये भरता वसुवित्तमम्। आ स्वे योनौ निषीदतु॥
आ जातं जातवेदसि प्रियं शिशीताऽतिथिम्। स्योन आ गृहपतिम्॥
अग्निनाऽग्निः समिध्यते कविर्गृहपतिर्युवा। हव्यवाड् जुह्वास्यः॥
त्वं ह्यग्ने अग्निना विप्रो विप्रेण सन्त्सता। सखा सख्या समिध्यसे॥
तं मार्जयन्त सुक्रतुं पुरो यावानमाजिषु। स्वेषु क्षयेषु वाजिनम्॥

७ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।
ते ह नाकं महिमानस्सचन्त यत्र पूर्वे साध्यास्सन्ति देवाः॥

प्रकृतिवत्[1]। समिध्यमानवतीं समिद्धवतीञ्चान्तरेण [1]पृथुपाजवत्यौ धाय्ये। "[2]त्वं वरुण" इति परिधानीया सर्वेषाम्। पुनः पशौ विधानात्। 'समिद्भ्यः प्रेष्य' इति चोक्ते "[3]होता यक्षदग्निं समिधा सुषमिधा समिद्धम्" इति प्रयाजप्रैषो मैत्रावरुणस्य। पूर्वमेव वरणे कृते

---

1. B. 1. reads प्रकृतिवत्कृते

१ पृथुपाजा अमर्त्यो घृतनिर्णिक् स्वाहुतः। अग्निर्यज्ञस्य हव्यवाट्॥
स बाधो यतस्रुच इत्था धिया यज्ञवन्तः। आ चक्रुरग्निमूतये॥

२ त्वं वरुण उत मित्रो अग्ने त्वां वर्द्धन्ति मतिभिर्वसिष्ठाः।
त्वे वसु सुषणनानि सन्तु यूयं पात स्वस्तिभिस्सदा नः॥

३ होता यक्षदग्निं समिधा सुषमिधा समिद्धं नाभा पृथिव्यास्सङ्गथे वामस्य।
वर्ष्मन्दिव इडस्पदे वेत्वाज्यस्य होतर्यज॥ १॥
होता यक्षत्तनूनपातमदितेर्गर्भं भुवनस्य गोपाम्।
मध्वाऽद्य देवो देवेभ्यो देवयानान्पथो अनक्तु वेत्वाज्यस्य होतर्यज॥ २॥
होता यक्षन्नराशंसन्नृशस्तं नृः प्रणेत्रम्। गोभिर्वपावान्स्याद्वीरैः
शक्तीवान् रथैः प्रथमयावा हिरण्यैश्चन्द्री वेत्वाज्यस्य होतर्यज॥ ३॥
होता यक्षदग्निमिड ईडितो देवो देवाꣳ आवक्षद् दूतो हव्यवाडमूरः।
उपेमं यज्ञमुपमां देवो देवहूतिमवतु वेत्वाज्यस्य होतर्यज॥ ४॥
होता यक्षद्बर्हिस्सुष्टरीमोर्णम्रदा अस्मिन्यज्ञे वि च प्र च प्रथताꣳ स्वासस्थं देवेभ्यः।
एमेनमद्य वसवो रुद्रा आदित्यास्सदन्तु प्रियमिन्द्रस्यास्तु वेत्वाज्यस्य होतर्यज॥ ५॥
होता यक्षद् दुर ऋष्वाः कवष्योऽकोषधाव्नीरुदाताभिजिहतां विपक्षोभिःश्रयन्ताम्।
सुप्रायणा अस्मिन् यज्ञे विश्रयन्तामृतावृधो वियन्त्वाज्यस्य होतर्यज॥ ६॥
होता यक्षदुषासानक्ता बृहती सुपेशसा नृः पतिभ्यो योनिं कृण्वाने।
सꣳ स्मयमाने इन्द्रेण देवैरिदं बर्हिस्सीदतां वीतामाज्यस्य होतर्यज॥ ७॥
होता यक्षद् दैव्या होतारो मन्द्रा पोतारा कवी प्रचेतसा।
स्विष्टमद्यान्यः करदिषा स्वभिगूर्तमन्य ऊर्जा सतवसेमं यज्ञं दिवि देवेषु धत्तां वीतामाज्यस्य होतर्यज॥ ८॥
होता यक्षत्तिस्रो देवीरपसामपस्तमा अच्छिद्रमद्येदमपस्तन्वताम्।
देवेभ्यो देवीर्देवमपो वियन्त्वाज्यस्य होतर्यज॥ ९॥
होता यक्षत्त्वष्टारमचिष्टुमपाकं रेतोधां विश्रवसं यशोधाम्।
पुरुरूपमकामकर्शनं सुपोषः पोषैस्स्यात्सुवीरो वीरैर्वेत्वाज्यस्य होतर्यज॥ १०॥
होता यक्षद्वनस्पतिमुपावस्रक्षद्धियो जोष्टारꣳ शशमन्नरः।
स्वदात्स्वधितिर्ऋतुथाद्य देवो देवेभ्यो हव्यवाड् वेत्वाज्यस्य होतर्यज॥ ११॥
होता यक्षदग्निं स्वाहाऽऽज्यस्य स्वाहा मेदसस्स्वाहा स्तोकानां स्वाहा स्वाहाकृतीनां स्वाहा हव्यसूक्तीनाम्।
स्वाहा देवाꣳ आज्यपान्स्वाहाऽग्निं होत्राज्जुषाणा अग्न आज्यस्य वियन्तु होतर्यज॥ १२॥

पशुं दैव्याश्च मनुष्याश्च । मेधो यज्ञः, तत्र भवा **मेध्याः** । [क]**दुरः** अन्तरा चात्वालोत्करौ । तदा तमुपनयत द्वारं चात्वालोत्करावन्तरेण नयत । [1]पशुर्मेधः, तस्य पतिरिन्द्रश्चाग्निश्च । **आशासाना** [2]एतामाशिषमिच्छन्ति[3] –यथा मेधपतिभ्यां मेधः पशुर्भवति । इन्द्रस्य चाग्नेश्च मेधमिच्छन्तो मेध्यं [4]द्वारमुपनयत । हरतेर्भकारः[5], 'हृग्रहोर्भश्छन्दसि' इति । [6]प्रहरत- अस्मै पशवे पाकार्थमित्याग्नीध्र उच्यते । सर्वत्र पूजार्थं बहुवचनम् । उपाकरण- [7]दर्भस्यास्तरणं कुरुत यत्र [illegible][8] भवतीत्यध्वर्युरुच्यते । विशिष्टं हि[9] श्रेयः [10]पशुः प्राप्नोति, यत्प्राप्यते [11]तपोभिः "अग्निः पशुरासीत्" इति लिङ्गात्, स्मृतेश्च । अत एनं मात्रादयोऽप्यनुमन्यन्तामिति पशुसंस्कारः । यथा हि [12]राजा पुत्रं [13]प्रयाजयेद्युध्यमानं । मात्रादयोऽप्यनुमन्यन्ते [14]जयेऽपि मरणेऽपि स्वर्ग इति । इवमिहापि । [15]**माता** अनुमन्यते । [16]पातीति **पिता** [17]रक्षतीति । **भ्राता** भर्तव्य इति । **सगर्भ्यः** इति [18]समाने गर्भे भवः ।

सगर्भ्यः । अनु सखा सयूथ्यः । उदीचीना ५ अस्य पदो निधत्तात् । सूर्यं चक्षुर्गमयतात् । वातं प्राणमन्ववसृजतात् । दिशः श्रोत्रम् । अन्तरिक्षमसुम् । पृथिवीं शरीरम् । एकधाऽस्य त्वचमाच्छयतात् । पुरा नाभ्या अपिशसो वपामुत्खिदतात् । अन्तरेवोष्माणं वारयतात् । श्येनमस्य वक्षः कृणुतात् । प्रशसा बाहू । शला दोषणी । कश्यपेवांसा । अच्छिद्रे श्रोणी । कवषोरू स्रेकपर्णाऽष्ठीवन्ता । षड्विंशतिरस्य वङ्क्रयः । ता अनुष्ठ्योच्च्यावयतात् । गात्रं गात्रमस्यानूनं कृणुतात् । ऊवध्यगोहं पार्थिवं खनतात् । अस्ना रक्षः संसृजतात् । वनिष्ठुमस्य मा राविष्ट । उरूकं मन्यमानाः । नेद्वस्तोके तनये । रविता रवच्छमितारः । अध्रिगो शमीध्वम् । सुशमि शमीध्वम् शमीध्वमध्रिगा३उ अपाप । (तै. ब्रा. ३.६.६.)

1. B. 1. reads पशुं मेधं तस्य पती.
2. Ibid एतेषां.
3. B. 1. and 2 read इच्छन्तः
4. B. 1. reads द्वार एतं.
5. Ibid भकारादेशः
6. क reads प्रहरति.
7. B. 1. reads दर्भास्तरणं
8. B. 2. reads मरणं
9. B. 2. omits हि.
10. B. 1. reads पशुं
11. B. 1. adds दान
12. B. 2. reads राजपुत्रं प्रयोजने युध्यमानं.
13. B. 1. reads प्रयोजयते.
14. B. 1. reads जयेऽपिसुखम्. B. 2. reads जये सुखं मरणे स्वर्गमपि.
15. B. 2. reads पिता for माता.
16. B. 2. reads पाति रक्षतीति.
17. B. 1. omits रक्षतीति and adds भरतीति before भ्राता.
18. B. 1. reads समानगर्भे.

क. दुरः—द्वारो हविर्मार्गान्, विशसनहेतून् पदार्थान्वेति सायणः । मेधपतिशब्दस्य यजमानपरत्वे यजमानाय यो मेधः पशुः तं मेध्या भवन्तः ऋत्विजः दुरः यज्ञद्वारं चात्वालोत्करयोर्मध्यं यजमान- फलमाशासानास्सन्त उपनयत । देवतापक्षे तु देवतायै मेधं पशुमाशासाना मेध्या भवन्तस्तं दुरःप्रति उपनयत इत्यर्थः ।

आम्नानात्। बह्वृचानान्तु [1]जमदग्निव्यतिरिक्तानामेवैताः। 'पर्यग्नये क्रियमाणायानुब्रूहि' इत्युक्ते [2]मैत्रावरुणो "[1]अग्निर्होता नो अध्वर" इत्याद्यामुत्तमाञ्च त्रिराह। ऋक्षु त्रिर्वचनमाद्यन्तयोः, न प्रैषेषु। ऋक्ष्वेव च प्रणवो याज्यावर्जम्। '[क]उप प्रेष्य' इति चोक्ते "[2]अजैदग्निः" इत्यध्रिगुप्रैषं मैत्रावरुणः। "[3]दैव्याश्शमितार" इत्यध्रिगुं होता। यथाप्रेषितं [ख]कुर्वन्ति। [ग]अग्निर्वायुश्च [3]दैव्यौ शमितारौ शमनस्य पशुमारणस्य [घ]कर्तारावुभौ [4]देवानां शमिताराविति। तयोः पूजार्थं [5]बहुवचनम्। **उत** शब्दोऽप्यर्थे। अपि **मनुष्या**-श्शमितारः एकत्वाच्छमितुः ऋत्विग्भिस्सह बहुवचनम्। **आरभध्वम्** [6]आलभध्वमिमं

आ नो यज्ञं भारती तूयमेत्विडा मनुष्वदिह चेतयन्ती।
तिस्रो देवीर्बर्हिरेदं स्योनं सरस्वती स्वपसः सदन्तु॥ ९॥
य इमे द्यावापृथिवी जनित्री रूपैरपिंशद् भुवनानि विश्वा।
तमद्य होतरिषितो यजीयान्देवं त्वष्टारमिह यक्षि विद्वान्॥ १०॥
उपावसृजत्मन्या समञ्जन्देवानां पाथ ऋतुथा हवींषि।
वनस्पतिश्शमिता देवो अग्निः स्वदन्तु हव्यं मधुना घृतेन॥ ११॥
सद्यो जातो व्यमिमीत यज्ञमग्निर्देवानामभवत्पुरोगाः।
अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहाकृतं हविरदन्तु देवाः॥ १२॥ (तै. ब्रा. ३.६.३)

1. B. 2. reads जमदग्नीनामेवैताः
2. B. 1. omits मैत्रावरुणः
3. क and B. 1 omit च
4. क and B. 2 read देवतानां
5. B. 1 adds शमितार इति after बहुवचनं
6. क omits आलभध्वम्

क. 'उपप्रेष्य होतर्हव्या देवेभ्यः' इत्यध्वर्युणोक्ते "अजैदग्निः" इति प्रैषं मैत्रावरुणः पठेदित्यर्थः।
ख. अध्वर्युशमित्रादय इति।
ग. अध्रिगुमन्त्राणामर्थो विव्रियते।
घ. अन्ते "उभौ देवानां शमितारौ" इति द्विवचनश्रवणादुपक्रमे श्रुतं "दैव्याः शमितार" इति बहुवचनं पूजार्थतया नेयम्।

१ अग्निर्होता नो अध्वरे वाजी सन् परिणीयते। देवो देवेषु यज्ञियः॥
परि त्रिविष्ट्यध्वरं यात्यग्नी रथीरिव। आ देवेषु प्रयो दधत्॥
परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत्। दधद्रत्नानि दाशुषे॥ (तै. ब्रा. ३.६.४)

२ अजैदग्निरसनद्वाजं नि देवो देवेभ्यो हव्यवाट् प्राञ्जोभिर्हिन्वानो।
धेनाभिः कल्पमानो यज्ञस्यायुः प्रतिरन्नुपप्रेष्य होतर्हव्या देवेभ्यः॥ (तै. ब्रा. ३.६.५)

३ दैव्याश्शमितार उत मनुष्या आरभध्वम्। उपनयत मेध्या दुर आशासाना मेधपतिभ्यां मेधम्। प्रास्मा अग्निं भरत। स्तृणीत बर्हिः। अन्वेनं माता मन्यताम्। अनु पिता अनु भ्राता

होता [1]प्रशास्तारं तीर्थेन प्रपाद्य दण्डमस्मै प्रयच्छेत्—' मित्रावरुणयोस्त्वा बाहुभ्यां प्रशास्त्रोः प्रशिषा प्रयच्छामि ' इति । ' मित्रावरुणयोस्त्वा बाहुभ्यां प्रशास्त्रोः प्रशिषा प्रतिगृह्णाम्यवक्रोऽविधुरो भूयासम् ' इति [2]प्रशास्ता प्रतिगृह्य यथान्तरो भवति तथा परिहरति । वेद्यां दण्डमवष्टभ्य दक्षिणतो होतुः प्रह्वस्तिष्ठन् [3]प्रैषानन्वाह प्रशास्ता । एकादश प्रयाजप्रैषाः । [क]नराशंसो द्वितीयः प्रयाजो वसिष्ठशुनकानाम् । तनूनपादन्येषाम् । प्रयाजयाज्या [ख]आप्रियो होतुः । " [4]समिद्धो अद्य " [4]इत्येव सर्वगोत्राणामस्माकम्, ऐन्द्राग्न-

1. B. 1 and 2 read मैत्रावरुणश्च प्रशास्तार
2. B. 1. reads प्रतिगृह्णाति between इति and प्रशास्ता· B. 1. and 2 omit प्रतिगृह्य
3. B. 1. omits प्रैषान्
4. B. 1. and 2 read इत्येत् for इत्येव

क. " समिद्धो अग्निः " इति शुनकानाम्, " जुषस्व नस्समिधम् " इति वसिष्ठानाम् ' समिद्धो अद्य " इति सर्वेषाम् ' ( आश्व. श्रौ., ३.२ ) इत्याश्वलायनोक्तेः बह्वृचाना " समिद्धो अग्निः " इत्यादय आप्रियः । अस्माकं तैत्तिरीयाणान्तु " समिद्धो अद्य " इत्येव तैत्तिरीयब्राह्मणे ऐन्द्राग्नपशुप्रकरणे तेषामेव पाठात् । एतदर्थमेव हि तेषां तत्र पाठ इति ।

ख. " समिद्धो अद्य मानुषः " इत्यारभ्य द्वादशमन्त्राणाम् ' आप्री ' इति सञ्ज्ञा । अग्निः, तनूनपात्, नराशंसः, इडः, बर्हिः, देव्यो द्वारः, उषासानक्ता, दैव्यौ होतारौ, तिस्रो देव्यः, त्वष्टा, वनस्पतिः, स्वाहाकृतिरिति द्वादशाप्रीदेवताः ।

१ समिद्धो अद्य मानुषो दुरोणे देवो देवान्यजसि जातवेदः ।
आ च वह मित्रमहश्चिकित्वान् त्वं दूतः कविरसि प्रचेताः ॥ १ ॥
तनूनपात्पथ ऋतस्य यानान्मध्वा समञ्जन्त्स्वदया सुजिह्व ।
मन्मानि धीभिरुत यज्ञमृन्धन्देवत्रा च कृणुह्यध्वरं नः ॥ २ ॥
नराशंसस्य महिमानमेषामुपस्तोषाम यजतस्य यज्ञैः ।
ते सुक्रतवश्शुचयो धियं धाः स्वदन्तु देवा उभयानि हव्या ॥ ३ ॥
आजुह्वान ईड्यो वन्द्यश्चायाह्यग्ने वसुभिस्सजोषाः ।
त्वं देवानामसि यह्व होता स एनान्यक्षीषितो यजीयान् ॥ ४ ॥
प्राचीनं बर्हिः प्रदिशा पृथिव्या वस्तोरस्या वृज्यते अग्रे अह्नाम् ।
व्युप्रथते वितरं वरीयो देवेभ्यो अदितये स्योनम् ॥ ५ ॥
व्यचस्वतीरुर्विया विश्रयन्तां पतिभ्यो न जनयः शुम्भमानाः ।
देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो भवथ सुप्रयाणाः ॥ ६ ॥
आसुष्वयन्ती यजते उपाके उषासानक्ता सदतां नि योनौ ।
दिव्ये योषणे बृहती सुरुक्मेऽधिश्रियं शुक्रपिशं दधाने ॥ ७ ॥
दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै ।
प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशन्ता ॥ ८ ॥

**सखा** मित्रम् । समानयूथे भवः **सयूथ्यः** । [1]**उदीचीनानस्य पदो निधत्तात्** स्थापयेति शमितोच्यते । चक्षुरादीनि यथालोकं [2]गमयतेति, तत उत्पत्तेः । **वातं प्राणमन्ववसृजतादिति** । यस्मात्सृष्टं तस्मिन्नेव च[3] क्षेप्तव्यमिति । **दिग्भ्यः श्रोत्रम्** तत्रैव [4]नीयते । असवः प्राणाः ते [5]अस्य सन्तीति असुमच्छरीरम्, लोपो मतोः । **अन्तरिक्षं** द्यावापृथिव्योरन्तरम्[6] । तदस्य [7]शरीरं प्राणं नयत, पूर्वं तत्र हीन्द्रस्य स्थानम् । हृदये सुरैरपि [8]सुरक्षितम् । [9]पशुदेवतानां लोकाः पशोः श्रूयन्ते "तत्रैतं [क]प्रस्तुत्येवोपस्तुत्येवोपावसृक्षत्" इति लिङ्गात् । **शरीरं** अस्थ्यादि पृथिवीम् । **एकधा** [10]एकीभूताम् । **अस्य त्वचमाच्छ्यतात्** छेदनमस्य कुरुत, मा विभक्त[11] । **पुरा** पूर्वम् । **पुरा** पूर्वम् उत्पन्नाया **नाभ्या** [12]वपाम्, **अपिशसः**[ख] स्थानं दक्षिणेन नाभिमावर्तस्यान्तः,[13] तस्माद्वपामुत्खिदत उत्पाटयत । अन्तर्यथा [14]कुम्भ्या भवत्यूष्मा तथैनं वारयत, स्थगयत कुम्भीम् । **वक्षः** उरः । **श्येनं** श्येनाकृति[ग] यथा भवत्युरस्तथा कुरुत । **प्रशसा** [घ]असी इव कुरुत । **बाहू** [ङ]प्रशस्तौ वा कुरुत । सकलौ गृह्णीत । **शला** शलाके इव

---

1. B. 1. and 2 read उदीचीनमस्य
2. B. 1. adds दैव्याः शमितारः, तेषां सामर्थ्याच्चक्षुरादित्यं गमयते after गमयतेति
   B. 2. reads गमयन्ति दैव्याः शमितारः, तेषां स्थानाच्चक्षुरादीनि यथोलोकं गमयतेति.
3. B. 2. omits च.
4. क reads दीयते.
5. क. and B. 2. read प्राणा अस्यन्तीति.
6. B. 1. reads अन्तरा.
7. क. reads शरीरेण नयते पूर्वं तत्र हि द्रव्यस्याधानम्.
8. B. 1. omits सु.
9. B. 1 reads पशुबन्धे.
10. B. 1. reads एकभूतमस्य त्वक्कर्म.
11. B. 2. reads विभक्ता.
12. B. 2 omits वपां. B. 1. reads उत्पन्ना नाभ्या वपा.
13. B. 2. reads आवर्तन्तेऽस्यान्तः.
14. Ibid कुंभ्यां.

क. यानि प्रियतमानि स्थानानि पशुदेवतानामिन्द्राग्न्यादीनां तेषु स्थानेषु दैव्यः पशुमिमं प्रापय्य तत्रैव स्थापयत्विति पशोरुत्तमगतिलाभश्रवणादिति ।

ख. छेदस्येत्यर्थः । 'नाभ्या अपिशसच्छेदात्पूर्वमेव वपामुत्खिद्त' इति सायणः ।

ग. श्येनपदमिवशब्दानुषङ्गेण वक्षस उपमार्थम् । श्येनसादृश्यसम्पत्तिर्वक्षसोऽविकलोद्धरणादेव सम्पादनीया, न तु वक्ष उद्धृत्य कर्तनादिना श्येनाकारता सम्पादनीया । तथा सति "हृदयस्याग्रेऽवद्यति अथ वक्षसः" इत्यवदानवाक्ये हविष्ट्वेन श्रुतस्य वक्षसः कर्तनादिना भङ्गापत्तेरिति । एवमेव शला, दोषणी, कश्यपेवांसा, कवषोरू, सेकपर्णा अष्ठीवन्ता इत्यादिष्वपि द्रष्टव्यम् ।

घ. "असिर्वै शास इत्याचक्षते" इति लिङ्गाच्छासशब्दोऽसेर्बोधकः । 'शसु' हिंसायामिति धातुः ।

ङ. 'शंसु' स्तुतौ इति धातोरुत्पन्नोऽयं शब्दः प्रशंसावाचकः । बाह्वोरविकलत्वेनोद्धरणे प्रशस्तत्वं सिध्यतीति ।

कुरुत। **दोषणी** निर्मांसे[1]। दोरिति बाहुमूलस्याख्या। [2]**कश्यपः** कच्छपः। कच्छपाकृती कुरुत। **अंसा** ग्रीवाबाह्वोर्मध्यमांशः। [3]स्फिजौ **श्रोणी**। ते **अच्छिद्रे** अच्छिन्ने सकले कुरुत। [क]**कवषोरू** [4]खड्गाभिधानं कवषः। तदाकृती कुरुत ऊरू। **स्रेको**[ख]गुल्मम्; [5]तत्पत्राकृती कुरुत। [6]**अष्ठीवन्ता**[ग] योनिप्रदेशः[7]। वक्रत्वाद् **वङ्क्रयः** पर्शवः। ता **अनुष्ठ्या** अनुष्ठानेन [8]यत्नेनोच्यावयत सर्वाः पृष्ठीः [9]वङ्क्रीणाम्। **गात्रं गात्रं** यद्यद् ग्रहणाय चोद्यते तत्तदस्या**नूनं कृणुतात्** सकलं कुरुत, मा गृहीतैकदेशम्। **ऊवध्यं** पुरीषम्। तद्यत्र [10]...ह्यतेऽवटे तदूवध्यगोहम्। तत्खनत पृथिव्याम्। [11]असृक् लोहितम्। तेन यथा रक्षसां [12]संसर्गो भवति तथा कुरुत। [13]बाहरक्त्वा लोहितेन रक्षसामर्थे [14]परित्यजत इत्युच्यतेऽध्वर्युः। **वनिष्टु**[घ] [15]स्थविरान्त्रम्। [16]तदस्य **मा राविष्ट** मा लाविष्ट। **उरूकं** वपां मन्यमानाः स्थविरान्त्रस्य लवनं मा कुरुत। न इत् **नेत् वस्तोके** तनये न भविष्यति वः किञ्चिदशुभं [16]यथैवं कुरुतात् यत्नं कुरुतात्। पुत्रे वा पौत्रे वा तोकः पौत्रतनयो नप्ता **रविता** लविता यस्मिन्विद्यते शमिता कर्मणि न तद्भवति। **रविता** रवच्छमिता स यस्मिन्विद्यते कर्मणि तत्तावद्भवति। रविता रवत्कर्म। शमितार इति ऋत्विज आमन्त्र्यन्ते। यस्मादत्र शमिता लविता न विद्यते तस्माद्यत्नं कुरुत। यथाऽन्यस्य लवने कर्तव्येऽन्यो न [17]लूयते एवं कुरुत। पुत्रस्य वा पौत्रस्य वा न भवत्यशुभमिति। [18]प्लुतगमनत्वादग्निरध्रिगुः, तस्यामन्त्रणम्। **अध्रिगो** इति। **शमीध्वं** शमनं

---

1. Ibid निर्मांसं.
2. Ibid कश्यपेव कच्छपाकृती.
3. B. 2. omits स्फिजौ and ते
4. B. 2. reads पोभिधानं. (?)
5. B. 1. reads तत्पर्णे पत्राकृती.
6. B. 2. reads अष्ठिवन्ता अस्थिवन्तौ.
7. B. 1. reads जानु for योनि.
8. B. 2. and क omit यत्नेन.
9. B. 2. reads वंक्री :.
10. B. 2. and क read गूह्यते.
11. B. 2. reads असृगेवाभिहितं.
12. B. 1. omils सं.
13. B. 2. reads बर्हिरक्तं.
14. B. 2. reads परित्यज्यते and B. 1 परित्यजतेत्यध्वर्युरुच्यते.
15. B. 2. reads तस्य.
16. B. 1. and 2 omit यथा
17. B. 1. adds शमिता after लूयते.
18. B. 1. reads अपीतगमनत्वात्. B. 2. read अप्लुतगमनत्वात्.

क. कवषौ-कपाटाकाराविति सायणः। गतिसाधनाश्वादिस्थानसदृश इति स्कन्ददेवः।

ख. करवीरपत्रमिति सायणः।

ग. अस्थिसंयुक्तौ इत्यर्थः।

घ. वनिष्ठुर्नाम वपासन्निहितो वपासदृशोऽवयवविशेष इति पूज्यपादाः।

कुरुत पशोर्मारणम्। **सुशमि शमीध्वं** सुष्टु शमनं कुरुत। दृढार्थं लोक(व)त्पुनर्वचनम्। अग्निगुरग्निः अपापो वायुः, अलोपकत्वात्। एतौ देवौ मारणस्य कर्तारौ। ताविमं पशुं श्रपयताम् अति[1]प्रकृष्टविद्वांसौ। यथा यथा येन येन प्रकारेण साधु तेन तेन प्रकारेण श्रपणमुभाभ्यां[2] कर्तव्यम्। शमीध्वमध्रिगा ३उ इति [3]प्लुतिः। अपापेत्युपांशु। अध्रिगो शमीध्वमित्येवमादि अपापान्तं त्रिः। अध्रिगुश्चापापश्चेत्यादि सकृत्। 'स्तोकेभ्योऽनुब्रूहि' इत्युक्ते "[1]जुषस्व सप्रथस्तमम्" इति [4]मैत्रावरुणः। "[2]ओजिष्ठं ते मध्यतो मेद उद्भृतम्" इति त्रिः। "[3]आ वृत्रहण" इति पुरोनुवाक्याः प्रपाद्य मैत्रावरुणस्य [4]वपा[5]पुरो[5]डाश-

1. B. 1. reads प्रकृष्टं.
2. B. 1 and 2 read भवथां.
3. B. 2. reads उच्चैः.
4. B. 1. reads मैत्रावरुणः प्रथमां त्रिः उत्तमां त्रिः.
5. B. 2. adds पशुः

१ जुषस्व सप्रथस्तमं वचो देवप्सरस्तमम्। हव्या जुह्वान आसनि ॥ १ ॥
इमं नो यज्ञममृतेषु धेहीमा हव्या जातवेदो जुषस्व।
स्तोकानामग्ने मेदसो घृतस्य होतः प्राशान प्रथमो निषद्य ॥ २ ॥
घृतवन्तः पावकवते स्तोकाः श्चोतन्ति मेदसः।
स्वधर्मं देववीतये श्रेष्ठं नो धेहि वार्यम् ॥ ३ ॥
तुभ्य ९ स्तोका घृतश्चुतोऽग्ने विप्राय सन्त्य।
ऋषिः श्रेष्ठस्समिध्यसे यज्ञस्य प्राविता भव ॥ ४ ॥
तुभ्यं श्चोतन्त्यध्रिगो शचीवः स्तोकासो अग्ने मेदसो घृतस्य।
कविशस्तो बृहता भानुनाऽगा हव्या जुषस्व मेधिर ॥ ५ ॥

२ ओजिष्ठं ते मध्यतो मेद उद्भृतं प्र ते वयं ददामहे।
श्चोतन्ति ते वसो स्तोका अधि त्वचि प्रति तान् देवशो विहि ॥

३ 'यदा जानातीन्द्राग्निभ्यां छागस्य वपाया मेदसोऽवद्यीयमानस्यानुब्रूहीति तदा मैत्रावरुणः पुरोनुवाक्यामाह- "आ वृत्रहण" इति।

४ वपायाः पुरोनुवाक्या—
आ वृत्रहणा वृत्रहभिश्शुष्मैरिन्द्र यातं नमोभिरग्ने अर्वाक्।
युवं राधोभिरकवेभिरिन्द्राग्ने अस्मे भवतमुत्तमेभिः।

वपायाः प्रैषः—
'होता यक्षदिन्द्राग्नी छागस्य वपाया मेदसो जुषतां हविर्होतर्यज'।

५ पुरोडाशस्य पुरोनुवाक्या—
विश्वस्यन्मनसा वस्य इच्छन्निन्द्राग्नी शास उत वा सजातान्।
नान्या युवत्प्रमतिरस्ति मह्यं स वां धियं वाजयन्तीमतक्षम् ॥

स्विष्टकृताम् । "गीर्भिर्विप्र" इत्यादि [क]तेषामेव याज्या होतुः । 'मनोतायै हविषोऽवदीयमानस्य' इत्युक्ते मैत्रावरुणः "त्वं ह्यग्ने प्रथमो मनोता इति त्रिः ।

क. वपापुरोडाशस्विष्टकृतामेवेति ।



पुरोडाशस्य प्रैषः—

'होता यक्षदिन्द्राग्नी पुरोडाशस्य जुषतां हविर्होतर्यज' ।

१ स्विष्टकृतः पुरोनुवाक्या—

त्वामीडते अजिरं दूत्याय हविष्मन्तस्सदिमान्मानुषासः ।
यस्य देवैरासदो बर्हिरग्नेऽहान्यस्मै सुदिना भवन्तु ॥

स्विष्टकृतः प्रैषः—

'होता यक्षदग्निं पुरोडाशस्य जुषतां हविर्होतर्यज' ।

२ वपाया याज्या—

गीर्भिर्विप्रः प्रमतिमिच्छमान ईट्टे रयिं यशसं पूर्वभाजम् ।
इन्द्राग्नी वृत्रहणा सुवज्रा प्र णो नव्येभिस्तिरतं देष्णैः ॥

पुरोडाशस्य याज्या—

मा च्छेद्म रश्मीँ रिति नाधमानाः पितॄणां शक्तीरनुयच्छमानाः ।
इन्द्राग्निभ्यां कं वृषणो मदन्ति ता ह्यद्री धिषणाया उपस्थे ॥

स्विष्टकृतो याज्या—

अग्निं सुदीतिं सुदृशं गृणन्तो नमस्यामस्त्वेड्यं जातवेदः ।
त्वां दूतमरतिं हव्यवाहं देवा अकृण्वन्नमृतस्य नाभिम् ॥

त्वं ह्यग्ने प्रथमो मनोताऽस्या धियो अभवो दस्म होता ।
त्वं सीं वृषन्नकृणोर्दुष्टरीतु सहो विश्वस्मै सहसे सहध्यै ॥ १ ॥
अधा होता न्यसीदो यजीयानिडस्पद इषयन्नीड्यस्सन् ।
तं त्वा नरः प्रथमं देवयन्तो महो राये चितयन्तो अनुग्मन् ॥ २ ॥
वृतेव यन्तं बहुभिर्वसव्यैस्त्वे रयिं जागृवांसो अनुग्मन् ।
रुशन्तमग्निं दर्शतं बृहन्तं वपावन्तं विश्वहा दीदिवांसम् ॥ ३ ॥
पदं देवस्य नमसा वियन्तः श्रवस्यवः श्रव आपन्नमृक्तम् ।
नामानि चिद्दधिरे यज्ञियानि भद्रायां ते रणयन्त सन्दृष्टौ ॥ ४ ॥
त्वां वर्धन्ति क्षितयः पृथिव्यां त्वं राय उभयासो जनानाम् ।
त्वं त्राता तरणे चेत्योऽभूः पिता माता सदमिन्मानुषाणाम् ॥ ५ ॥
स पर्येण्यः स प्रियो विक्ष्वग्निर्होता मन्द्रो निषसादा यजीयान् ।
तं त्वा वयं दम आ दीदिवांसमुप ज्ञुबाधो नमसा सदेम ॥ ६ ॥

"[1]पुरूण्यग्न" इति परिधानीयां त्रिः । "[2]आभरतम्" इति [1]पुरोनुवाक्यायाज्ये[3]षाश्च

सं त्वा वयं सुधियो नव्यमग्ने सुम्नायव ईमहे देवयन्तः ।
त्वं विशो अनयो दीद्यानो दिवो अग्ने बृहता रोचनेन ॥ ७ ॥
विशां कविं विश्पतिं शाश्वतीनां नितोशनं वृषभं चर्षणीनाम् ।
प्रेती षणिं मिषयन्तं पावकं राजन्तमग्निं यजतं रयीणाम् ॥ ८ ॥
सो अग्न ईजे शशमे च मर्तो यस्त आनट् समिधा हव्यदातिम् ।
य आहुतिं परिवेदा नमोभिर्विश्वेत्स वामा दधते त्वोतः ॥ ९ ॥
यस्मा उ ते सहि महे विधेम नमोभिरग्ने समिधोत हव्यैः ।
वेदी सूनो सहसो गीर्भिरुक्थैराते भद्रायां सुमतौ यतेम ॥ १० ॥
आ यस्ततन्थ रोदसी विभासा श्रवोभिश्च श्रवस्यस्तरुत्रः ।
बृहद्भिर्वाजैः स्थविरेभिरस्मे रेवद्भिरग्ने वितरं विभाहि ॥ ११ ॥
नृवद्वसो सदमिद्धेह्यस्मे भूरि तोकाय तनयाय पश्वः ।
पूर्वीरिषो बृहतीरारे अघा अस्मे भद्रा सौश्रवसानि सन्तु ॥ १२ ॥

1. B. 2. reads पुरोनुवाक्याः.

१ पुरूण्यग्ने पुरुधा त्वाया वसूनि राजन्वसुताते अश्याम् ।
पुरूणि हि त्वे पुरुवार सन्त्यग्ने वसु विधते राजनि त्वे ॥

२ आ भरतं शिक्षतं वज्रबाहू अस्माँ इन्द्राग्नी अवतं शचीभिः ।
इमे नु ते रश्मयः सूर्यस्य येभिः सपित्वं पितरो न आयन् ॥

३ होता यक्षदिन्द्राग्नी छागस्य हविष आत्तामद्य मध्यतो मेद उद्भृतं पुरा द्वेषेभ्यः पुरा पौरुषेय्या गृभो घस्तां नूनं घासे अज्राणां यवसप्रथमानां सुमत्क्षराणां शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानां पार्श्वतः श्रोणितः शितामत उत्सादतोऽङ्गादङ्गादवत्तानां करत एवेन्द्राग्नी जुषेतां हविर्होतर्यज ।

वनस्पतेः पुरोनुवाक्या—

देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण प्रदिवस्ते अर्थम् ।
प्रदक्षिणिद्रशनया नियूय ऋतस्य वक्षि पथिभी रजिष्ठैः ॥

प्रैषः—

होता यक्षद्वनस्पतिमभि हि पिष्टतमया रभिष्ठया रशनयाऽधित यत्रेन्द्राग्न्योश्छागस्य हविषः प्रिया धामानि यत्र वनस्पतेः प्रिया पाथांसि यत्र देवानामाज्यपानां प्रिया धामानि यत्राग्नेर्होतुः प्रिया धामानि तत्रैतं प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षत् रभीयांसमिव कृत्वी करदेवं देवो वनस्पतिः जुषतां हविर्होतर्यज ।

स्विष्टकृतः पुरोनुवाक्या—

पिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ ऋतूँ ऋतुपते यजेह ।
ये दैव्या ऋत्विजस्तेभिरग्ने त्वं होतॄणामस्याऽऽयजिष्ठः ॥

हविर्वनस्पतिस्विष्टकृतां मैत्रावरुणस्य। "[1]उपोह यद्विदथं वाजिनो भूः" इति होतुरेतेषामेव याज्याः। 'प्रमितिमिच्छमाना' इत्यर्द्धर्चे विरामो वसोर्होमार्थम्। "[2]देवं बर्हिस्सुदेवं देवैः" इति प्रैषा मैत्रावरुणस्यानूयाजानाम्।

---

प्रैषः—

होता यक्षदग्निं स्विष्टकृतमयाडग्निरिन्द्राग्नियोश्छागस्य हविषः प्रिया धामानि अयाड्वनस्पतेः प्रिया पाथांसि अयाड् देवानामाज्यपानां प्रिया धामानि यक्षदग्नेः होतुः प्रिया धामानि यक्षत्स्वं महिमानमायजतामेज्या इषःकृणोतु सो अध्वरा जातवेदा जुषतां हविर्होतर्यज।

१ हविषो याज्या—

उपोह यद्विदथं वाजिनो भूर्गीर्भिर्विप्राः प्रमितिमिच्छमानाः।
अर्वन्तो न काष्ठां नक्षमाणा इन्द्राग्नी जोहुवतो नरस्ते॥

वनस्पतेर्याज्या—

वनस्पते रशनयाऽभिधाय पिष्टतमया वयुनानि विद्वान्।
वह देवत्रा दिधिषो हवींषि प्रचदातरममृतेषु वोचः॥

स्विष्टकृतो याज्या—

अग्निं स्विष्टकृतमयाडग्निरिन्द्राग्नियोश्छागस्यहविषः प्रियाधामानि, अयाड् वनस्पतेः प्रिया पाथांसि, अयाड् देवानामाज्यपानां प्रिया धामानि यक्षदग्नेर्होतुः प्रिया धामानि यक्षत्स्वं महिमानमायजतामेज्या इषा कृणोतु सो अध्वरा जातवेदा जुषतां हविः। अग्ने यदद्य विशो अध्वरस्य होतः पावक शोचे वेष्ट्वं हि यज्वा ऋता यजासि महिना वियद्भूर्हव्या वह यविष्ठ या ते अद्य।

२ देवं बर्हिस्सुदेवं देवैस्स्यात्सुवीरं वीरैर्वस्तोर्वृज्येताक्तोः प्रभ्रियेतात्यन्यान् राया बर्हिष्मतो मदेम वसुवने वसुधेयस्य वेतु यज॥ १॥

देवीर्द्वारः सङ्घाते विड्वीर्यामञ्छिथिरा ध्रुवा देवहूतौ वत्स ईमेनास्तरुण आमिमीयात्कुमारो वा नवजातो मैना अर्वा रेणुककाटः पृणग्वसुवने वसुधेयस्य वियन्तु यज॥ २॥

देवी उषासानक्ताऽद्यास्मिन्यज्ञे प्रयत्यह्वेतामपि नूनं देवीर्विशः प्रायासिष्टां सुप्रीते सुधिते वसुवने वसुधेयस्य वीतां यज॥ ३॥

देवी जोष्ट्री वसुधिती ययोरन्याऽघा द्वेषांसि यूयवदन्या वक्षद्वसु वार्याणि यजमानाय वसुवने वसुधेयस्य वीतां यज॥ ४॥

देवी ऊर्जाहुती इषमूर्जमन्याऽवक्षत्सग्धिं सपीतमन्या नवेन पूर्वं दयमाना स्याम पुराणेन नवं तामूर्जमूर्जाहुती ऊर्जयमाने अधातां वसुवने वसुधेयस्य वीतां यज॥ ५॥

देवा दैव्या होतारा नेष्टारा पोतारा हताघशंसावाभरद्वसू वसुवने वसुधेयस्य वीतां यज॥ ६॥

देवीस्तिस्रस्तिस्रो देवीरिडा सरस्वती भारती द्यां भारत्यादित्यैरस्पृक्षत्सरस्वतीमं रुद्रैर्यज्ञमावीदिहैवेडया वसुमत्या सधमादं मदेम वसुवने वसुधेयस्य वियन्तु यज॥ ७॥

देवो नराशंसस्त्रिशीर्षा षडक्षः शतमिदेनं शितिपृष्ठा आदधति सहस्रमीं प्रवहन्ति मित्रावरुणेदस्य होत्रमर्हतो बृहस्पतिस्तोत्रमश्विनाऽऽध्वर्यवं वसुवने वसुधेयस्य वेतु यज॥ ८॥

[1]उत्तरा याज्या होतुः। "[2]अग्निमद्य" इति सूक्तवाकप्रैषा मैत्रावरुणस्य। यदाऽऽज्यभागौ तदा 'अग्नय आज्यस्यानुब्रूहि' इत्युक्ते "[3]अग्निः प्रत्नेन" इति पुरोनुवाक्या। 'अग्नय आज्यस्य प्रेष्य' इत्युक्ते "होता यक्षदग्निमाज्यस्य जुषतां हविर्होतर्यज" इति। अथवा न हविश्शब्दः। [1]अग्नेस्सर्वत्रास्य प्रकृतिवत्। 'सोमायाज्यस्यानुब्रूहि' इत्युक्ते

---

देवो वनस्पतिर्वर्षप्रावा घृतनिर्णिग्द्यामग्रेणास्पृक्षदान्तरिक्षं मध्येनाऽप्राः पृथिवीमुपरेणादृंहीद्वसुवने वसुधेयस्य वेतु यज ॥ ९ ॥

देवं बर्हिर्वारितीनां निधे धासि प्रच्युतीनामप्रच्युतं निकामधरणं पुरूस्पार्हं यशस्वदेना बर्हिषाऽन्याबर्हींष्यभिष्याम वसुवने वसुधेयस्य वेतु यज ॥ १० ॥

देवो अग्निः स्विष्टकृत्सुद्रविणा मन्द्रः कविस्सत्यमन्माऽऽयजी होता होतुर्होतुरायजीयानग्ने यान्देवानयाड् याँ अपि प्रैर्ये ते होत्रे अमत्सत तां ससनुषीं होत्रां देवङ्गमां दिवि देवेषु यज्ञमेरयेमं स्विष्टकृच्चाग्ने होताऽभूर्वसुवने वसुधेयस्य नमोवाके वीहि यज ॥ ११ ॥

1. क. reads आग्नेयः

१ देवं बर्हिर्वसुवने वसुधेयस्य वेतु ॥ १ ॥

देवीर्द्वारः वसुवने वसुधेयस्य वियन्तु ॥ २ ॥

देवी उषासा नक्ता वसुवने वसुधेयस्य वीताम् ॥ ३ ॥

देवी जोष्ट्री वसुवने वसुधेयस्य वीताम् ॥ ४ ॥

देवी ऊर्जाहुती वसुवने वसुधेयस्य वीताम् ॥ ५ ॥

देवा दैव्या होतारा वसुवने वसुधेयस्य वीताम् ॥ ६ ॥

देवीस्तिस्रस्तिस्रो देवीर्वसुवने वसुधेयस्य वियन्तु ॥ ७ ॥

देवो नराशंसो वसुवने वसुधेयस्य वेतु ॥ ८ ॥

देवोवनस्पतिर्वसुवने वसुधेयस्य वेतु ॥ ९ ॥

देवं बर्हिर्वारितीनां वसुवने वसुधेयस्य वेतु ॥ १० ॥

देवो अग्निस्स्विष्टकृत्सुद्रविणा मन्द्रः कविरसत्यमन्माऽऽयजी होता होतुर्होतुरायजीयानग्ने यान्देवानयाट् याँ अपिप्रेः ये ते होत्रे अमत्सत तां ससनुषीं होत्रां देवङ्गमां दिवि देवेषु यज्ञमेरयेमं स्विष्टकृच्चाग्ने होताऽभूर्वसुवने वसुधेयस्य नमोवाके वीहि ॥ ११ ॥

अग्निमद्य होतारमवृणीतायं यजमानः पचन् पक्तीः पचन् पुरोडाशं बध्नन्निन्द्राग्निभ्यां छागं सूपस्था अद्य देवो वनस्पतिरभवदिन्द्राग्निभ्यां छागेनाघस्तं तं मेदस्तः प्रति पचताग्रभीष्टामवीवृधेतां पुरोडाशेन त्वामद्यर्षे आर्षेयर्षीणां नपादवृणीतायं यजमानो बहुभ्य आसङ्गतेभ्य एष मे देवेषु वसुवार्यायक्ष्यत इति ता या देवा देवदानान्यदुस्तान्यस्मा आच शास्स्वाऽऽच गुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषस्सूक्तवाकाय सूक्ता ब्रूहि ॥

अग्निः प्रत्नेन जन्मना शुम्भानस्तनुवां स्वाम्। कविर्विप्रेण वावृधे ॥

"सोम गीर्भिष्ट्वा वयम्" इति सोमायाज्यस्य प्रेष्य' इत्युक्ते "होता यक्षत्सोममाज्यस्य जुषतां हविर्होतर्यज" इति। नित्यो हविश्शब्दः। रमिष्टया रशनयाधित। यत्राग्नेराज्यस्य हविषः प्रिया धामानि यत्र सोमस्याज्यस्य हविषः प्रिया धामानि यत्रेन्द्राग्न्योः यत्र वनस्पतेरिति न देवतोपलक्षणं होतुः सर्वत्र मैत्रावरुणेनोपलक्षितत्वात्। पशुस्विष्टकृद्वर्जं याज्यायां देवतानिगमाः। वनस्पतौ ये यजामहे भूर्भुवस्सुवरयाट् वनस्पतेरग्नेः प्रिया धामान्ययाट् सोमस्य प्रिया धामान्ययाट् इद्राग्न्योः प्रिया धामान्ययाट् देवानामाज्यपानां प्रिया धामानि यक्षद्वनस्पतेर्होतुः प्रिया धामानि यक्षत्स्वं महिमानमित्येवमादि। जुषतां हविर्वनस्पते रशनयेति याज्या।

उपदेश:—व्याहृतीरुक्त्वा "वनस्पतिमभि हि पिष्टतमया [1]रभिष्टया रशनयाऽधित" इति पूर्ववदुक्त्वा "जुषतां हविः" "वनस्पते रशनया" इति केचित्कुर्वन्ति। "होता यक्षदग्निं स्विष्टकृतमयाडग्निरग्नेराज्यस्य हविषः प्रिया धामानि सोमस्याज्यस्य हविषः प्रिया धामानि अयाडिन्द्राग्न्यो[2]श्छागस्य हविषः प्रिया धामानि" इत्येवमादि। याज्यायामप्येवम्। व्याहृतीरुक्त्वा "अग्निं स्विष्टकृतम्" इत्येवमादि च। "पचन् पक्तीः पचन् पुरोडाशं गृह्णन्नग्नय आज्यं गृह्णन्सोमायाज्यं ब्रध्नन्निन्द्राग्निभ्यां छागं सूपस्था [2]अद्य देवो वनस्पतिरभवत् अग्नय आज्येन सोमायाज्येनेन्द्राग्निभ्यां छागेनावस्ताम्" इत्येवमाद्यविकृतम् ॥

[3]इति पाशुकं हौत्रं मैत्रावरुणञ्च समाप्तम् ॥

---

1. B. 1. reads रक्षिष्टया.
2. B. 2. reads आज्यदेव.
3. B. 1. reads इति पशुबन्धहौत्रम्.

१ सोम गीर्भिष्ट्वा वयं वर्द्धयामो वचो विदः। सुमृडीको न आ विश ॥

# [1]अथ चातुर्मास्यहौत्रम् ।

सूत्रोक्ता अन्वारम्भणीयायां याज्यानुवाक्याः । "[1]अग्ने यं यज्ञमध्वरम्" "[2]सोम यास्ते मयोभुवः" इत्याज्यभागयोः पुरोनुवाक्ये । वैश्वदेवस्य सर्वत्र जुषाणयाज्यात्वमेव । "[3]अग्निर्मूर्द्धा" "[4]भुवो यज्ञस्य" इत्याग्नेयस्य । "[5]त्वं नस्सोम" "[6]या ते धामानि" इति सोमस्य । "[7]तत्सवितुः" "[8]अचित्ती यच्चकृम" इति सवितुरुपांशु । "[9]चोदयित्री" "[10]पावीरवी" इति सरस्वत्याः । "[11]पूषा गाः" "[12]शुक्रं ते" इति पूष्णः । सर्वकर्मसु पौष्णान्तानाम् । "[13]तेऽवर्द्धन्त" "[14]प्र चित्रमर्कम्" इति मरुताम् । "[15]विश्वेदेवा ऋता-

---

1. B. 1. reads अथ चातुर्मास्यानां.

१ अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि । स इद्देवेषु गच्छति ॥ (तै. सं. ४.१.११.१.)

२ सोम यास्ते मयोभुव ऊतयस्सन्ति दाशुषे । ताभिर्नोऽविता भव ॥ ,,

३, ४ See page 281 of आपस्तम्बश्रौतसूत्र Vol. I for अग्निर्मूर्द्धा and भुवो यज्ञस्य.

५ त्वं नस्सोम विश्वतो रक्षा राजन्नघायतः । न रिष्येत्त्वावतस्सखा ॥ (तै. सं. २.३.१४.१.)

६ या ते धामानि दिवि या पृथिव्यां या पर्वतेष्वोषधीष्वप्सु ।
तेभिर्नो विश्वैस्सुमना अहेडन् राजन्त्सोम प्रतिहव्या गृभाय ॥ ,,

७ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ (तै. सं. ४.१.११.१.)

८ अचित्ती यच्चकृमा दैव्ये जने दीनैर्दक्षैः प्रभूती पूरुषत्वता ।
देवेषु च सवितर्मानुषेषु च त्वन्नो अत्र सुवतादनागसः ॥ ,,

९ चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् । यज्ञं दधे सरस्वती ॥ ,,

१० पावीरवी कन्या चित्रायुस्सरस्वती वीरपत्नी धियं धात् ।
ग्नाभिरच्छिद्रं शरणं सजोषा दुराधर्षं गृणते शर्म यंसत् ॥ ,,

११ पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः । पूषा वाजं सनोतु नः ॥ ,,

१२ शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि ।
विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु ॥ ,,

१३ तेऽवर्द्धन्त स्वतवसो महित्वना नाकं तस्थुरुरु चक्रिरे सदः ।
विष्णुर्यद्धावद्वृषणं मदच्युतं वयो न सीदन्नधि बर्हिषि प्रिये ॥

१४ प्रचित्रमर्कं गृणते तुराय मारुताय स्वतवसे भरध्वम् ।
ये सहांसि सहसा सहन्ते रेजते अग्ने पृथिवी मखेभ्यः ॥

१५ विश्वेदेवा ऋतावृध ऋतुभिर्हवनश्रुतः । जुषन्तां युज्यं पयः ॥ (तै. सं. २.४.१४.५.)

वृधः" "[१]विश्वेदेवाः शृणुतेदं हवं मे" इत्यामिक्षायाः। "[२]द्यावा नः पृथिवी" "[३]प्र पूर्वजे पितरः" इत्येककपालस्योपांशु। "[४]अग्निं स्तोमेन" "[५]स हव्यवाडमर्त्यः" इति स्विष्टकृतः। उक्ता आध्वर्यवाः प्रयाजानूयाजानाम्। "[६]शन्नो भवन्तु" "[७]वाजे वाजे" इति वाजिनस्य। [1]ऊर्द्ध्वज्ञुरूर्द्ध्वचेत्य सन्तानम्। प्रणयनाग्निमन्थनसामिधेन्यः पशुवत्।

वरुणप्रघासानाम्–"[८]इन्द्राग्नी रोचना दिवः" "[९]श्नथद् वृत्रम्" "[१०]प्र चर्षणिभ्यः" [2]इत्यैन्द्राग्नस्य। "[११]मरुतो यस्य हि क्षये" "[१२]प्रियसे कम्" इति [3]मारुत्याः। [ "[4]अव ते हेड वरुण[१३]" "[१४]उदुत्तमम्" इति वारुण्याः। ] "[१५]कया नश्चित्र आभुवत्"

1. B. 1. and 2 read ऊर्ध्वज्ञुरनवानमर्द्धर्चस्य.
2. B. 1. reads इति च.
3. B. 1. and 2 read मरुतां.
4. कुण्डलान्तर्गतो भागः क पुस्तके त्रुटितः.

१ विश्वेदेवाः शृणुतेदं हवं मे ये अन्तरिक्षे य उप द्यविष्ठ।
ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम्॥ (तै. सं. २.४.१४.५.)

२ द्यावा नः पृथिवी इमं सिध्रमद्य दिविस्पृशम्। यज्ञं देवेषु यच्छताम्॥

३ प्र पूर्वजे पितरा नव्यसीभिर्गीर्भिः कृणुध्वं सदने ऋतस्य।
आ नो द्यावापृथिवी दैव्येन जनेन यातं महि वां वरूथम्॥

४ अग्निं स्तोमेन बोधय समिधानो अमर्त्यम्। हव्या देवेषु नो दधत्॥

५ स हव्यवाडमर्त्य उशिग्दूतश्च नो हितः। अग्निर्धिया समृण्वति॥

६ शन्नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः।
जम्भयन्तोऽहिं वृकं रक्षांसि सनेम्यस्मद्युयवन्नमीवाः॥

७ वाजे वाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः।
अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः।

८, ९ See page 281 of आपस्तम्बश्रौतसूत्र Vol. I.

१० प्र चर्षणिभ्यः पृतना हवेषु प्र पृथिव्या रिरिचा ये दिवश्च।
प्र सिन्धुभ्यः प्रतिगिरिभ्यो महि त्वा प्रेन्द्राग्नी विश्वा भुवनान्यन्या॥

११ मरुतो यस्य हि क्षये पाथे दिवो वि महसः। स सुगोपातमो जनः॥

१२ प्रियसे कं भानुभिस्संमिमिक्षिरे ते रश्मिभिस्त ऋक्वभिस्सुखादयः।
ते वाशीमन्त इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः॥

१३,१४ See page 295 of आपस्तम्बश्रौतसूत्र Vol. I.

१५ कया नश्चित्र आभुवदूती सदावृधस्सखा। कया शचिष्ठया वृता॥

"[१]को अद्य युङ्क्ते" इति [[1]कस्योपांशु । "[२]अग्ने नय" "[३]आ देवानाम्" इति स्विष्टकृतः । "[४]शं नो भवन्तु" "[५]वाजे वाजे" इति ]वाजिनस्य । [2]प्रयाजाद्यनूयाजान्तोऽवभृथः बह्वृचबोधायनमतात् । बर्हिर्वर्जाः[3] प्रयाजानूयाजाः । "[६]अप्स्वग्ने" "[७]अप्सु मे सोम" इत्याज्यभागयोः । "[८]वृषा सोम" इति वा इह[4] सोमस्य परिपाठात् । "[९]इमं मे वरुण" "[१०]तत्त्वा यामि" इति वरुणस्य । "[११]त्वन्नो अग्ने" "[१२]स त्वन्नो अग्ने" इत्यग्निवरुणयोः[5] । नायाट्करणनिगदः । केचित्त्वनर्थलुप्तं कुर्वन्ति । सामिधेनीनिवृत्तिः, इन्धनाभावात् । प्रवरनिवृत्तिः, श्रुतेः । ऋषिष्टुता इत्यूहेन "अग्निमप आवह" इति यक्ष्यमाणानामावाहनम् । न वरुणस्य । यदि निष्कासः-[6]आज्यपानावाह्य अग्नीवरुणौ स्विष्टकृतौ होत्रायावह, इति ।

---

1. Ibid.
2. B. 1. and 2 read प्रयाजप्रभृति.
3. क and B. 2 read वर्जं.
4. B. 2 and क omit इह.
5. B. 1. reads इत्यग्निवरुणस्य
6. क reads आज्यपानाज्यपानावह.

१ को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् ।
आसन्निषून्हृत्स्वसो मयोभून्य एषां भृत्यामृणधत्स जीवात् ॥

२ अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥

३ आ देवानामपि पन्थामगन्म यच्छक्नवाम तदनु प्रवोळ्हुम् ।
अग्निर्विद्वान् त्स यजात् सेदु होता सो अध्वरान् त्स ऋतून् कल्पयाति ॥

४ शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः ।
जम्भयन्तोऽहिं वृकं रक्षांसि सनेम्यस्मद् युयवन्नमीवाः ॥

५ वाजे वाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः ।
अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः ॥

६ अप्स्वग्ने सधिष्टव सौषधीरनुरुध्यसे । गर्भे सञ्जायसे पुनः ॥

७ अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा ।
अग्निञ्च विश्वशम्भुवमापश्च विश्वभेषजीः ॥

८ वृषा सोम द्युमाँ असि वृषा देव वृषव्रतः । वृषा धर्माणि दधिषे ॥

९ इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युराचके ॥

१० तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।
अहेडमानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः ॥

११ त्वन्नो अग्ने वरुणस्य विद्वान्देवस्य हेडोऽवयासिसीष्ठाः ।
यजिष्ठो वह्नितमश्शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत् ॥

१२ स त्वन्नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ ।
अवयक्ष्व नो वरुणं रराणो वीहि मृडीकं सुहवो न एधि ॥

न वा स्विष्टकृद्गुणो वाजसनेयिमतात्। ऊहेन समाप्य जातवेदस इति। प्रादेशो वेदिपक्षे प्रवराङ्गमभिमर्शनं 'होतृवर्य[1]' इति लिङ्गात्। अतो लुप्यते। धून्वतः सन्नहनाभावात् नोपदेशेन तदर्थं गमनं विद्यते। जपाः प्रधानस्य वाऽदृष्टोपकारात्। स्रुगादानादि पूर्ववत्। स्रुगापादानाद्येव युक्तम्, उपदेशादितराणीति वचनात्॥

साकमेधेषु—वार्त्रघ्नावाज्यभागौ। [2]अग्नेरनीकवतः "[1]भद्रा ते अग्ने" "[2]भद्रं ते अग्ने" "[3]सैनानीकेन" इति प्रधानस्य। "[4]स्वस्ति नो दिवः" "[5]यथा होतः" इति स्विष्टकृतः। "[6]अग्निमीडे" "[7]वृषा सोम" इत्याज्यभागयोः। सान्तपनस्य "[8]सान्तपना इदं हविः" "[9]संवत्सरीणा मरुतः" इति हविषः। प्राकृते स्विष्टकृतः। गृहमेधीय [3]आज्यभागप्रभृतीडान्तः। अयाट्करणवर्जश्च स्विष्टकृतः। "[10]अग्निना रयिमश्नवत्" "[11]गयस्फानो अमीवहा" इत्याज्यभागयोः। गृहमेधीयस्य "[12]गृहमेधास आगत" "[13]प्रबुध्निया"

1. क reads होतृवर्य.　　2. B. 1 and 2 omit अग्नेः
3. B. 2. reads आज्यभागप्रवासकः

१ भद्रा ते अग्ने स्वनीक सन्दृग् घोरस्य सतो विषुणस्य चारुः।
न यत्ते शोचिस्तमसा वरन्त न ध्वस्मानस्तन्वी रेप आ धुः॥
२ भद्रं ते अग्ने सहसिन्ननीकमुपाक आ रोचते सूर्यस्य।
रुशद् दृशे ददृशे नक्तया चिदरूक्षितं दृश आरूपे अन्नम्॥
३ सैनानीकेन सुविदत्रो अस्मे यष्टा देवाँ आयजिष्ठ स्वस्ति।
अदब्धो गोपा उत नः परस्पा अग्ने द्युमदुत रेवद्दिदीहि॥
४ स्वस्ति नो दिवो अग्ने पृथिव्या विश्वायुर्धेहि यजथाय देव।
यत्सीमहि दिविजात प्रशस्तं तदस्मासु द्रविणं धेहि चित्रम्॥
५ यथा होतर्मनुषो देवताता यज्ञेभिस्सूनो सहसो यजासि।
एवा नो अद्य समना समानानुशन्नग्न उशतो यक्षि देवान्॥
६ अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम्॥
७ वृषा सोम द्युमाँ असि वृषा देव वृषव्रतः। वृषा धर्माणि दध्रिषे॥
८ सान्तपना इदं हविर्मरुतस्तज्जुजुष्टन। युष्माकोती रिशादसः॥
९ संवत्सरीणा मरुतस्स्वर्का उरुक्षयास्सगणा मानुषेषु।
ते अस्मत्पाशान् प्रमुञ्चन्त्व[4] हसस्सान्तपना मदिरा मादयिष्णवः॥
१० अग्निना रयिमश्नवत्पोषमेव दिवे दिवे। यशसं वीरवत्तमम्॥
११ गयस्फानो अमीवहा वसुवित्पुष्टिवर्द्धनः। सुमित्रस्सोम नो भव॥
१२ गृहमेधास आगत मरुतो माप भूतन। प्रमुञ्चन्तो नो अंहसः॥
१३ प्रबुध्निया ईरते वो महांसि प्रणामानि प्रयज्यवस्तिरध्वम्।
सहस्रियं दम्यं भागमेतं गृहमेधीयं मरुतो जुषध्वम्॥

इति प्रधानस्य। "[1]उपयमेति" "[2]इमो अग्न" इति स्विष्टकृतः। [1]एषा [क]बह्वृचमतिः। केचित्सामिधेनीप्रयाजप्रतिषेधादप्रतिषिद्धं [2]कुर्वन्ति। अग्निमग्न आवह सोममावह मरुतो गृहमेधिन आवह अग्निं होत्रायावह' इत्येवमादि। प्रयाजाङ्गत्वात्स्रुगादापनमाज्यभागाभ्याम्। 'मरुतां गृहमेधिनां प्रिया धामानि यक्षदग्नेः' [3]इत्येवमादीडान्तः। प्राकृतौ क्रीडिन[4] आज्यभागौ। "[3]क्रीडं वःशर्द्धो मारुतम्" "[4]प्रैषा मज्मेषु" इति प्रधानस्य। "[5]अग्निमग्निं हवीमभिः" "[6]तं हि शश्वन्त ईडते" इति स्विष्टकृतः। [ "[7]तेऽवर्द्धन्त[5]" "[8]प्र चित्रमर्कम्" इति स्वतवत्याम्। महाहविषः पञ्च सञ्चरान्ते "[9]इन्द्राग्नी रोचना दिवः" "[10]श्नथद्वृत्रम्" इत्यैन्द्राग्नस्य। "[11]इन्द्रं वो विश्वतस्परि" "[12]इन्द्रं नरः" इत्यैन्द्रस्य।

---

1. येषाम् इति क पुस्तके.
2. B. 1. reads प्रवरनिगदान् after कुर्वन्ति.
3. क and B. 2. read इत्येव इडान्तः.
4. B. 2. omits क्रीडिनः.
5. कुण्डलान्तर्गतो भागः कपुस्तके नास्ति। B. 2. पुस्तके तु 'एषा बह्वृचमतिः' इत्यतः पूर्वं लिखितः।

१ उप यमेति युवतिस्सुदक्षं दोषा वस्तोर्हविष्मती घृताची।
उप स्वैनमरतिर्वसूयुः॥

२ इमो अग्ने वीततमानि हव्याऽजस्रो वक्षि देवतातिमच्छ।
प्रति न ईं सुरभीणि वियन्तु॥

३ क्रीडं वश्शर्द्धो मारुतमनर्वाणं रथे शुभम्। कण्वा अभि प्र गायत॥

४ प्रैषामज्मेषु विथुरेव रेजते भूमिर्यामेषु यद्ध युञ्जते शुभे।
ते क्रीडयो धुनयो भ्राजदृष्टयः स्वयं महित्वं पनयन्त धूतयः॥

५ अग्निमग्निं हवीमभिस्सदा हवन्त विश्पतिम्। हव्यवाहं पुरुप्रियम्॥

६ तं हि शश्वन्त ईडते स्रुचा देवं घृतश्चुता। अग्निं हव्याय वोढवे॥

७ तेऽवर्धन्त स्वतवसो महित्वना नाकं तस्थुरुरु चक्रिरे सदः।
विष्णुर्यद्धावद् वृषणं मदच्युतं वयो न सीदन्नधि बर्हिषि प्रिये।

८ प्र चित्रमर्कं गृणते तुराय मारुताय स्वतवसे भरध्वम्।
ये सहांसि सहसा सहन्ते रेजते अग्ने पृथिवी मखेभ्यः।

९ इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः।
तद् वां चेति प्र वीर्यम्॥

१० श्नथद् वृत्रमुत सनोति वाजमिन्द्रा यो अग्नी सहुरी सपर्यात्।
इरज्यन्तो वसव्यस्य भूरेः सहस्तमा सहसा वाजयन्ता॥

११ इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः। अस्माकमस्तु केवलः॥

१२ इन्द्रं नरो नेमधिता हवन्ते यत् पार्या युनजते धियस्ताः।
शूरो नृषाता शवसश्चकान आ गोमति व्रजे भजा त्वं नः॥

क. 'पुष्टिमन्तौ विराजौ साम्राज्ये अनिगदे' (आश्व. सू., २.१८.) इति स्विष्टकृद्याज्ययोरनिगदत्वमुक्तमिति। निगदः 'अयाडग्निः' इत्यारभ्य 'जुषताम्' इत्यन्तो मन्त्रः। तद्रहिते संयाज्ये इति।

"[1]विश्वकर्मन् हविषा वावृधानः" "[2]विश्वकर्मन् हविषा वर्द्धनेन" इत्येककपालस्य। "[3]तमिन्द्रं वाजयामसि" "[4]युजे रथम्" इति वृत्रघ्नः। "[5]अग्ने नय" "[6]आ देवानाम्" इति स्विष्टकृतः। ]

पितृयज्ञे न [1]पित्रुद्देशाः। न बर्हिष्मन्तौ प्रयाजानूयाजौ। न जपाः। शंयुवाकान्तं कर्म होतुः। 'अग्निं होत्रायावह' 'स्वं महिमानमावह' इत्यस्य स्थाने [[2]अग्निं कव्यवाहनमावाहयेत्। उत्तमे चैवं प्रयाजे प्रागाज्यपेभ्यो निगमयन्ति तदुपांशु। अनिगदः स्विष्टकृत्। आवह देवान् पितॄन् यजमानायेति नित्यमेषा बह्वृचमतिः। कस्यचिद्धौत्रस्याम्नानात्। यदन्यत्प्रकृतिवत्। हिङ्कृत्य "[7]उशन्तस्त्वा हवामहे" इति त्रिः। न प्रवर उभयमतेऽपि।] 'अग्निं कव्यवाहनं स्विष्टकृतं होत्रायावह स्वं महिमानमावह' इत्येवमादि। [3]न वा स्विष्टकृतः, कव्यवाहनेन [4]निवृत्तत्वात्। 'स्वाहा [5]देवानाज्यपान् स्वाहाग्निं कव्यवाहनं होत्राज्जुषाणा' इति प्रयाजान्ते। "[8]आ नो अग्ने सुकेतुना" "[9]त्वं सोम महे भगम्" इत्याज्यभागयोः। "[10]त्वं सोम प्रचिकितो मनीषा" "[11]त्वया हि नः पितरः

---

1. पित्रुद्देशा इति क and B. 2.
2. कुण्डलान्तर्गतो भागः कपुस्तके नास्ति.
3. B. 2. omits न वा.
4. B. 2. reads निर्वृतत्वात्.
5. B. 2. reads देवं.

१ विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम्।
मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु॥

२ विश्वकर्मन् हविषा वर्धनेन त्रातारमिन्द्रमकृणोरवध्यम्।
तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथासत्॥

३ तमिन्द्रं वाजयामसि महे वृत्राय हन्तवे।
स वृषा वृषभो भुवत्॥

४ युजे रथं गवेषणं हरिभ्यामुप ब्रह्माणि जुजुषाणमस्थुः।
वि बाधिष्ट स्य रोदसी महित्वेन्द्रो वृत्राण्यप्रती जघन्वान्॥

५-६ See page 108, Foot-notes 2-3.

७ उशन्तस्त्वा हवामह उशन्तस्समिधीमहि।
उशन्नुशत आवह पितॄन्हविषे अत्तवे॥ (तै. सं. २.६.१२.१.)

८ आ नो अग्ने सुकेतुना रयिं विश्वायुपोषसम्। मार्डीकं धेहि जीवसे॥

९ त्वं सोम महे भगं त्वं यून ऋतायते। दक्षं दधासि जीवसे॥

१० त्वं सोम प्रचिकितो मनीषा त्वं रयिष्ठमनुनेषि पन्थाम्।
तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः॥ (तै. सं. २.६.१२.१.)

११ त्वया हि नः पितरस्सोम पूर्वे कर्माणि चक्रुः पवमान धीराः।
वन्वन्नवातः परिधींरपोर्णु वीरेभिरश्वैर्मघवा भवा नः॥ ,,

सोम पूर्वे" "[1]त्वं सोम पितृभिस्संविदानः" इति सोमस्य पितृमतः। "[2]बर्हिषदः पितरः" "[3]आहं पितॄन्" "[4]उपहूताः पितरः" इति [1]बर्हिषदः। "[5]अग्निष्वात्ताः पितर एह गच्छत" "[6]ये अग्निष्वात्ता येऽनग्निष्वात्ताः" "[7]वान्यायै दुग्धे जुषमाणः करम्भम्" इत्यग्निष्वात्तानाम्। प्रधानानां [2]तिस्रस्तिस्रः। "[8]यदग्ने कव्यवाहन" "[9]त्वमग्न ईडितो जातवेदः" "[10]मातली कव्यैः" इति स्विष्टकृतः। निगदश्च यथादेवतम्। यदाऽग्नये कव्यवाहनाय [3]मन्थं तदाप्येत एव निगदाः[4]। "[11]यमो दाधार यथा पञ्च" "[12]त्रिकद्रुकेभिः"

1. B. 1. reads बर्हिषदाम्.
2. B. 2. reads न तिस्रस्तिस्रः.
3. क. omits मन्थं
4. B. 2. reads मेदाः

१ त्वं सोम पितृभिस्सं विदानोऽनु द्यावापृथिवी आततन्थ।
तस्मै त इन्दो हविषा विधेम वयं स्याम पतयो रयीणाम्॥ (तै. सं. २.६.१२.२.)

२ बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम्।
त आ गतावसा शन्तमेनाथास्मभ्यं शंयोररपो दधात॥ ,,

३ आहं पितॄन् सुविदत्राँ अवित्सि नपातञ्च विक्रमणञ्च विष्णोः।
बर्हिषदो ये स्वधयासुतस्य भजन्त पित्वस्त इहागमिष्ठाः॥ (तै. सं. २.६.१२.३.)

४ उपहूताः पितरस्सोम्यासो बर्हिष्येषु निधिषु प्रियेषु।
त आगमन्तु त इह श्रुवन्त्वधिब्रुवन्तु ते अवन्त्वस्मान्॥ ,,

५ अग्निष्वात्ताः पितर एह गच्छत सदस्सदः सदत सुप्रणीतयः।
अत्ता हवींषि प्रयतानि बर्हिष्यथा रयिं सर्ववीरं दधातन॥ (तै. सं. २.६.१२.२)

६ ये अग्निष्वात्ता ये अनग्निष्वात्ता मध्ये दिवः स्वधया मादयन्ते।
तेभ्यः स्वराडसुनीतिमेतां यथावशं तन्वं कल्पयाति।

७ वान्यायै दुग्धे जुषमाणः करम्भम्। उदीराणा अवरे परे च।
अग्निष्वात्ता ऋतुभिः संविदानाः। इन्द्रवन्तो हविरिदं जुषन्ताम्॥

८ यदग्ने कव्यवाहन पितॄन्यक्ष्यृतावृधः।
प्र च हव्यानि वक्ष्यसि देवेभ्यश्च पितृभ्य आ॥ (तै. सं. २.६.१२.५.)

९ त्वमग्न ईडितो जातवेदोऽवाड्ढव्यानि सुरभीणि कृत्वा।
प्रादाः पितृभ्यः स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवींषि॥ ,,

१० मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः।
याँश्च देवा वावृधुर्ये च देवान्त्स्वाहाऽन्ये स्वधयाऽन्ये मदन्ति॥ ,,

११ यमो दाधार पृथिवीं यमो विश्वमिदं जगत्।
यमाय सर्वमित्तस्थे यत् प्राणद्वायुरक्षितम्॥
यथा पञ्च यथा षड् यथा पञ्चदशर्षयः।
यमं यो विद्यात् स ब्रूयाद्यथैक ऋषिर्विजानते॥

१२ त्रिकद्रुकेभिः पतति षडुर्वीरेकमिद् बृहत्।
त्रिष्टुब् गायत्री छन्दांसि सर्वा ता यम आहिता॥

इति [1]यमाय। " [१]इमं यम प्रस्तरम् " " [२]अङ्गिरोभिरागहि " " [३]अङ्गिरसो नः पितरः " इत्यङ्गिरस्वतः। सर्वासु विकृतिषु 'इडोपहूत' इति परिपाठात्। " [४]अदितिर्न उरुष्यतु " " [५]महीमूषु मातरम् " इत्यादित्यस्य। " [६]अग्नाविष्णू " " [७]अग्नाविष्णू महि धाम " इत्यग्नावैष्णवस्य। " [८]बृहस्पते " " [९]एवा पित्रे " इति बृहस्पतेः। " [१०]इन्द्रं वो विश्व-तस्परि " " [११]इन्द्रं नरः " इत्यैन्द्रस्य। " [१२]प्र णो देवी " " [१३]आ नो दिवः" इति सरस्वत्याः। " [१४]पूषा गा अन्वेतु नः " " [१५]शुक्रं ते अन्यत् " इति [2]पूष्णः।

---

1. क. omits यमाय.
2. क. reads पौष्णः.

१ इमं यम प्रस्तारमा हि सीदाङ्गिरोभिः पितृभिस्संविदानः।
आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन्हविषा मादयस्व ॥ (तै. सं. २.६.१२.६.)

२ अङ्गिरोभिरागहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व।
विवस्वन्त ँ हुवे यः पिता तेऽस्मिन्यज्ञे बर्हिष्या निषद्य ॥ ,,

३ अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवस्सोम्यासः।
तेषां वय ँ सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥ ,,

४ अदितिर्न उरुष्यत्वदितिश्शर्म यच्छतु। अदितिः पात्वंहसः ॥ (तै. सं. १.५.११.५.)

५ महीमूषु मातरं सुव्रतानामृतस्य पत्नीमवसे हुवेम।
तुविक्षत्रामजरन्तीमुरूचीं सुशर्माणमदितिं सुप्रणीतिम् ॥ ,,

६, ७. See page 152 of आपस्तम्बश्रौतसूत्र Vol. I for both अग्नाविष्णू.

८ बृहस्पते अति यदर्यो अर्हाद् द्युमद् विभाति क्रतुमज्जनेषु ॥
यद् दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥

९ एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः ॥
बृहस्पते सुप्रजा वीरवन्तो वयं स्याम पतयो रयीणाम् ॥

१० इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः। अस्माकमस्तु केवलः ॥ (तै. सं. १.६.१२.१.)

११ इन्द्रं नरो नेमधिता हवन्ते यत्पार्या युनजते धियस्ताः।
शूरो नृषाता शवसश्चकान आ गोमति व्रजे भजात्वन्नः ॥ ,,

१२, १३ See page 152 of आपस्तम्बश्रौतसूत्र Vol. I.

१४ पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः। पूषा वाजं सनोतु नः ॥ (तै. सं. ४.१.११.२.)

१५ शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि।
विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु ॥ ,,

शुनासीरीयस्य "[1]इन्द्राग्नी रोचना दिवः" "[2]श्नथद् वृत्रम्" इत्यैन्द्राग्नस्य। "[3]विश्वदेवाः" "[4]विश्वेदेवाः" इति वैश्वदेवस्य [1]परिपठिते। "[5]वायो शतम् हरीणाम्" "[6]प्र याभिर्यासि" इति [2]वायोः। अन्यद्वैश्वदेववत्। वायोर्निर्गुणस्यापि[3] सगुण एव[4] याज्यानुवाक्ये। यस्मान्निर्गुणस्यापि [5]वायोः श्वेतवत्यः पठिताः॥

[6]इति हौत्रं पशुबन्धचातुर्मास्यानाम्॥

---

1. B. 1 and 2 read शुनासीरीयस्य after परिपठिते.
2. क reads पयसः.
3. क omits अपि.
4. B. 2. omits एव.
5. B. 2. reads वायव्यस्य विपरिपठिताः श्वेतवत्यः.
6. Ibid समाप्तं पशुचातुर्मास्यहौत्रम्.

१, २ See page 281 of आपस्तम्बश्रौतसूत्र Vol. I.

३ विश्वे देवा ऋतावृध ऋतुभिर्हवनश्रुतः। जुषन्तां युज्यं पयः॥

४ विश्वे देवाः शृणुतेमं हवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ॥
ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम्॥

५ वायो शत हरीणां युवस्व पोष्याणाम्।
उत वा ते सहस्रिणो रथ आयातु पाजसा॥ (तै. सं. २.२.१२.७.)

६ प्र याभिर्यासि दाश्वांसमच्छा नियुद्भिर्वायविष्टये दुरोणे।
नि नो रयिं सुभोजसं युवेह नि वीरवद्गव्यमश्व्यं च राधः॥ (तै. सं. २.२.१२.८.)

श्रीः

# धूर्तस्वामिकृते आपस्तम्बश्रौतसूत्रभाष्ये नवमः प्रश्नः ।

## प्रथमः पटलः ।

### श्रुतिलक्षणं प्रायश्चित्तं विध्यपराधे विधीयते ॥ १ ॥

उक्ता [क]हविर्यज्ञाः । तेषु प्रायश्चित्तमवश्यम्भावि दै[illegible] पुरुषस्य भवति । न च [1]शास्त्रप्रत्यये कर्मण्यशास्त्रीयं कर्म शक्यते कर्तुम् । अतः प्रायश्चित्तानि [2]च शास्त्रलक्षणान्युपदिश्यन्ते-**श्रुतिलक्षणं प्रायश्चित्तमिति** । श्रूयते [ख]नित्यकालं न [3]केनचित्क्रियत इति श्रुतिर्वेदः । येन लक्ष्यते [4]ज्ञायते तल्लक्षणम् । श्रुतौ लक्षणमस्य तदिदं **श्रुतिलक्षणम्** । किं पुनस्तत् ? **प्रायश्चित्तम्** । प्रायो विनाशः । कथं प्रायमुपदिष्टं[5] विनाशं कर्तुमात्मन [6]उपदिष्ट इति ज्ञायते ? 'चिती संज्ञाने[7]' इत्यस्य धातोश्चित्तम्, अनेकार्थत्वाद्धातोस्सन्धानं चित्तमित्युच्यते । [8]प्रायस्य चित्तं विनष्टस्य कर्मणस्सन्धानं [9]प्रायश्चित्तम् । [10]चितिचित्तयोस्सुडागमो [ग]लक्षणात्कृतः । श्रुतौ लक्षणं प्रायश्चित्तस्योपदिष्टमिति [11]पिण्डितार्थः ।

तत्र चोदयति-[12]सर्वकर्मसु श्रुतिलक्षणेषु प्रायश्चित्तं श्रुतिलक्षणमिति न वक्तव्यमिति ।

---

1. B. 2. reads शास्त्रे......ण्यशास्त्रम्.
2. Ibid omits च.
3. B. 2. and 3 read केनचिदविकृतेन.
4. B. 2. omits ज्ञायते.
5, 6. B. 2. reads उपविष्ट.
7. B. 2. reads धातुः । तस्य चित्तः.
8. B. 2. omits प्रायस्य चित्तं.
9. B. 1. reads उच्यते for प्रायश्चित्तं.
10. B. 1. adds प्रायस्य.
11. B. 2. reads पिण्डार्थः.
12. B. 3. reads सर्वकर्मणि श्रुतिलक्षणे.

क. सौत्रामण्यपि पशुबन्धविकारत्वादुक्तप्रायेति हविर्यज्ञा इत्यविशेषोक्तिः ।

ख. सर्वेषामाचार्योच्चारणपूर्विकैव प्रथमावगतिर्वेदस्य । नियतस्वरक्रमविशिष्टस्य तस्य तथैव सम्पादयितुं शक्यत्वात् । अतो न केनचित्पुरुषेण स्वातन्त्र्येण वेदो विरचितो भारतादिवत् । तथा च नियतस्वरक्रमविशिष्टत्वे सति आचार्योच्चारणानूच्चारणपूर्वकप्राप्यत्वे च सत्यलौकिकार्थबोधकत्वं श्रुतेर्लक्षणं सम्पद्यते ।

ग. प्रायशब्दस्य विनाशपर्यायस्याकारान्तत्वाच्चितिचित्तयोस्सुडागमेन प्रायश्चित्तमिति रूपसिद्धिः । लक्षणाच्च सुडागमः । गणसूत्रवृत्तिकारेण 'प्रायस्य चितिचित्तयोस्सुट् सकारो वा' इति पठितत्वात् ।

तत्र परिहारः—अन्यानि कर्माणि श्रुतिलक्षणानि न भवन्ति, प्रायश्चित्तमेव [1]श्रुतिलक्षणमिति नैवमुपदिश्यते । [2]कस्तर्हि ? श्रुतौ लक्षणमात्रं प्रायश्चित्तस्योपदिश्यते चिह्नमात्रम् । यथा "यस्य पुरोडाशः क्षायति" इति । [3]क्षाणो दाहः । तल्लक्षणं प्रायश्चित्तस्य । अतो द्वयोर्बहूनाञ्च[4] क्षामत्वे प्रायश्चित्तम् । इतरथा 'पुरोडाश' इत्येकवचनचोदितत्वादेकस्यैव क्षामत्वे प्रायश्चित्तं स्यात् । यथा "[क]रक्षांसि वा एतत्पशुं सचन्ते यदेकदेवत्य आलब्धो भूयान् भवति" इति [ख]लिङ्गसंख्ययोरविविक्षितत्वाल्लक्षणचोदनासु [ग]गर्भिणीप्रायश्चित्तं द्वादशपद्यां[घ] षोडशपद्याञ्च भवति ।

[ङ]विध्यपराधे विधीयते- [ विधीयत[5] इति विधिः कर्म, अपराधोऽन्यथा क्रिया । विधेरपराधो विध्यपराधः तस्मिन् विध्यपराधेऽन्यथाभावे प्रायश्चित्तं विधीयते । ] यथा "[च]यस्यानो वा रथो वाऽन्तराऽग्नी याति" इति अविधानेनान्तरा [6]रथादिनां गमने प्राय-

---

1. B. 1. reads श्रुतिलक्षणमेवमुपदिश्यते.
2. B. 1. and 3 read कस्तर्ह्यर्थः.
3. B. 1. reads क्षार्ण; B. 3 क्षामः
4. B. 2. reads वा for च.
5. कुण्डलान्तर्गतो भागः B. 2. पुस्तके नास्ति.
6. B. 2. omits रथादीनां.

क. "यस्यास्ते हरितो गर्भः,, (तै. सं. ३.३.१०१) इति मन्त्रस्य तात्पर्यबोधकमिदं वाक्यम् "यस्यास्ते हरितोगर्भ इत्याह देवत्रैनां गमयति रक्षसामपहत्यै" इत्युक्तत्वात् ।" एकदेवत्य आलब्धः-एकां देवतामुद्दिश्योपाकृतः पशुः गर्भधारणेन भूयान् भवतीति यदेतद्वैकल्यं तेन रक्षांसि सचन्ते-'सच षच समवाये' समवयन्ति, तत्परिहाराय पूर्वोक्तमन्त्राभिमन्त्रणेनैतां वशां देवत्र गमयति देवेष्वेव प्रापितवान्भवति, ततो रक्षांस्यपहन्यन्त इति वाक्यस्यार्थः ।

ख. ग्रहैकत्वाधिकरणन्यायेनोद्देश्यविशेषणानामविवक्षेव निमित्तविशेषणानामप्यविवक्षेति ।

ग. 'यद्यष्टापदीत्यनुबुध्येत "धाता रातिस्सूर्यो देव" इत्याहुती हुत्वा' (आप. श्रौ. ९.१८.१६.) इत्यादिना विहितम् ।

घ. प्रायश्चित्तविधायकवाक्ये 'अष्टापदी'ति पदं गर्भिणीत्वं बोधयति, गर्भपादैस्सहास्या अष्टौ पादा भवन्तीति । अनेकत्वस्य निमित्तविशेषणत्वेनाविवक्षायां सत्यां द्वादशपद्यां षोडशपद्याञ्च गर्भद्वित्वे च समानमिदं प्रायश्चित्तमिति ।

ङ. सूत्रभेदमाश्रित्य व्याख्याति । तत्र प्रथमसूत्रेण-प्रायश्चित्तस्य श्रुतौ लक्षणं चिह्नमुक्तम् । द्वितीय-सूत्रेण विहितस्य पुरुषप्रवृत्यपराधे प्रायश्चित्तं, न विधानान्तरेण विहितस्यान्यथाभावे भवतीति ।

च. "वज्रो वै चक्रम् । वज्रो वा एतस्य यज्ञं विच्छिनत्ति, यस्यानो वा रथो वाऽन्तराऽग्नी याति आहवनीयमुद्वाप्य गार्हपत्यमुद्धरेत्" (तै. ब्रा. १.४.४.१०.) इति रथचक्रस्य वज्रसमानत्वात् आहवनीयगार्हपत्ययोर्मध्ये रथस्य शकटस्य वा गमने सति वज्रेण यज्ञो विच्छिद्येत । अतस्तत्परिहारायाहवनीयं विनाश्य गार्हपत्यात्पुनरुद्धरणं प्रायश्चित्तं विहितमिति ।

श्चित्तम्। [क]यत्र विधिः, न तत्र प्रायश्चित्तम्। यथा रथे [1]वाऽनसि [2]वा दक्षिणाभूते नीयमाने।

अथवा 'श्रुतिलक्षणं प्रायश्चित्तं विध्यपराधे विधीयत' [3]इत्येकं सूत्रम्। अर्थविशेषश्चान्यः—विधीयते ब्राह्मणेनेति विधिः कर्म। तस्यापराधेऽन्यथाक्रियायाम्। श्रुतिलक्षणं विधीयते न स्मृतिलक्षणम्, विधानसामर्थ्यात्। यत्र ह्युभयस्य प्राप्तिः कर्ममध्येऽपि हि[4] [ख]स्मृतिलक्षणं प्रमाणम्। तत्र [ग]ब्राह्मौदनिको यदा सर्व औपासन आहितोऽनुगच्छति तदौपासनानुगमनप्रायश्चित्तञ्च प्राप्नोति "यदि प्रायायादनु वा गच्छेत्" इति। ब्राह्मौदनिकश्च विध्यपराधे श्रुतिलक्षणमेव [5]विधीयत इति नियमाद्ब्राह्मौदनिकमेव भवति। अग्न्युत्पत्तिस्तु या औपासनस्योक्ता सैव भवतीति। 'यावन्न समारोप्यते विध्यपराध' इति वचनात्॥ १॥

पुरुषापराधे तु स्मार्तश्च श्रौतश्चोभय[6] भवति प्रायश्चित्तम्। यथा पर्याहितादीनामेककार्याणां यूपादीनां विकल्पो दृष्टः, इह त्वेकनिमित्तानां [7]प्रायश्चित्तानां विकल्पस्स्यादत इदमुच्यते—

**एकस्मिन्दोषे श्रूयमाणानि प्रायश्चित्तानि समभ्युच्चीयीरन् अर्थान्तरत्वात्॥ २॥**

**एकस्मिन्दोषे** एकस्मिन्निमित्ते यानि श्रूयन्ते प्रायश्चित्तानि-यथाऽग्निहोत्रस्कन्दने "अस्कान्द्यौः पृथिवीम्" इत्यभिमन्त्रणम्, "उन्नम्भय" इत्युपसर्गः, अनशनम् 'आ होतोः [8]प्रातस्सायं नाश्नित्' इति। [9]एतेषां समुच्चय एव भवति। किं कारणम्? अर्थान्तरत्वात्।

---

1, 2. B. 2. omits वा.
3. B. 2. reads इत्येतदेकं.
4. B. 2. omits हि.
5. B. 2. reads भवतीति.
6. B. 2. omits उभयं.
7. B. 1. omits प्रायश्चित्तानां.
8. B. 2. omits प्रातः
9. B. 2. reads समुच्चय एतेषां भवति.

क. "यजुर्युक्तं रथमध्वर्यवे ददाति" इति वाजपेये विधिः। तत्रान्तराऽग्नी नीयमानेऽपि तस्मिन्न प्रायश्चित्तमिति।

ख. यथाऽऽचमनादिकं कर्माङ्गत्वेन वेदमूलस्मृतिवाक्यैर्विहितम्।

ग. ब्रह्मौदनपाकार्थमौपासनस्सर्व आहितः पाकात्पूर्वं यद्यनुगच्छेत् तदौपासनानुगमप्रायश्चित्तम्। उत्पत्तिस्तु–औपासनविहितैव स्मृतिप्राप्ता। यदि पाकादूर्ध्वमनुगच्छेत् तदाप्युत्पत्तिरौपासनविहितैव। प्रायश्चित्तन्तु–'यदि प्रायायादनु वा गच्छेत्' इति। नात्र स्मृतिप्राप्तं प्रायश्चित्तम्। तस्माच्छ्रुतिलक्षणं प्रायश्चित्तं विध्यपराधे विधीयते न स्मृतिलक्षणमिति योजना।

अर्थान्तरस्य भावोऽर्थान्तरत्वम्, तस्मादर्थान्तरत्वात्। अर्थः प्रयोजनम्। [1]प्रयोजनान्यत्वादित्यर्थः। अन्यत्प्रयोजनमभिमन्त्रणेन, अन्यदुपसर्गेण, अन्यच्चानशनेन। [क]अतस्समुच्चयः। यथा लोके-अक्ष्यामयेऽन्यो दोषोऽञ्जनेन हन्यते, अन्योऽनशनेन, अन्यो निवातशयनेन। [2]अतो दोषनिर्घातार्थत्वात्समुच्चयः।

उपदेशस्तु-यत्रार्थवादेनार्थान्तरत्वादो[3] न भवति, एकार्थतैव, तत्र विकल्प एव भवति न [ख]समुच्चयः। यथा-पाथिकृतः स्वर्गपथप्रतिपत्त्यर्थः, [4]तथा वैश्वानरोऽपि स्वर्गपथप्रतिपत्त्यर्थ एव। अतस्तयोर्विकल्प [5]एव भवतीति समुच्चयोऽन्याय्यः; अदृष्टदोष उभयोरुपदेशादुभाभ्यामेव हन्यत इति। यस्तु शाखान्तरस्थो विधिः 'एकेषाम्' इत्युच्यते [6]तत्र विकल्प एवाधिकविधेरनित्यत्वात्[ग]। यथा 'देवांजननमगन्यज्ञ इत्येकेषाम्' इति [घ]समुच्चयसम्भवेऽपि तत्र विकल्प एव ॥ २ ॥

तत्र त्रिविधं प्रायश्चित्तम्—

**जपो होम इज्या च ॥ ३ ॥**

**जपो**ऽनाज्ञातस्य। **होम**स्तस्यैव। अन्येषान्तु[7] "त्वं नो अग्न" इत्येवं प्रकाराणाम्। **इज्या** पुनःक्रिया। यथा "अन्यां दुग्ध्वा पुनर्होतव्यम्। अथोत्तरस्मै हविषे

---

1. B. 2. adds प्रयोजनार्थत्वात्.
2. B. 2. omits अतः and reads दोषनिर्घातार्थत्वेऽपि.
3. B. 1 and 2 read अर्थान्तराभावः.
4. B. 1. reads यथा.
5. B. 2. omits एव भवति.
6. Ibid तत्र.
7. B. 2 and 3 read च.

क. यद्यपि दोषनिर्घातः प्रयोजनमेकम्, तथाप्येकस्मिन्दोषे निमित्तेऽनेकप्रायश्चित्तोपदेशाद्विकल्पस्य चान्याय्यत्वाद्दोषनिर्घातार्थत्वेऽपि चावान्तरप्रयोजनभेदेन साधनतया समुच्चयोपपत्तेः पाक्षिकत्वमन्याय्यमिति समुच्चयः।

ख. यथा "व्रीहिभिर्यजेत" 'यवैर्यजेत" इत्यनयोर्यागसाधनव्रीहियवविधायकत्वेनैकार्थत्वात्समुच्चयो न भवति तथैव पथिकृद्वैश्वानरयोरपि स्वर्गपथप्रतिपत्त्यर्थत्वरूपस्यैकस्य प्रयोजनस्यार्थवादैर्बोधितत्वान्न समुच्चयः। 'अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां पौर्णमासीं वाऽतिपादयेत् पथो वा एषोऽध्यपथेनैति" "अव वा एष सुवर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी सन्नमावास्यां वाऽतिपादयति सुवर्गाय हि लोकाय दर्शपूर्णमासाविज्येते वैश्वानरं द्वादशकपालं निर्वपेत्" इत्युभयत्र सार्थवादो विधिरित्युपदेशमतम्। Cf. पूर्वमीमांसासूत्र. 12.3.12.

ग. एकशाखीयप्रयोगोपदेशे शाखान्तरीयाङ्गोपसंहारे 'एकेषाम्' इति न वक्तव्यम्। अतो यत्रैकेषामिति निर्देशस्तत्र विधीयमानप्रयोगादधिकधर्मोपदेश इत्यवगमादनित्यत्वमिति।

घ. अदृष्टकार्यत्वात्समुच्चयसम्भवेऽपि विकल्प एव मतान्तरत्वेनोपन्यासादिति।

वत्सानपाकुर्यात् " इति ॥ ३ ॥

**दोषनिर्घातार्थानि भवन्ति** ॥ ४ ॥

एतानि त्रिविधान्यपि प्रायश्चित्तानि यो विध्यपराधे दोषस्तस्य निर्घातार्थानि [1]भवन्ति, त्रिविधस्यानुक्रमणात्[2]। "यद्युत्पूतं विचित्रं देयम्[3]" इत्यत्र दानं केवलं दोषनिर्घातार्थं न भवति। अत्र होमो वा सर्वप्रायश्चित्तस्य जपो वाऽ[4]नाज्ञानत्रयस्य कार्य एव। कर्माङ्गं प्रायश्चित्तं दोषनिर्घातञ्च करोति। [5]अत्र होमो वा गृहदाहादौ फलवदिति मीमांसकाः ॥ ४ ॥

**अनन्तरं दोषात्कर्तव्यानि** ॥ ५ ॥

तच्च [6]**दोषादनन्तरं** कर्तव्यम्, न [7]पर्वापेक्षा इष्टीनामपि ॥ ५ ॥

**निर्हृते दोषे पुनःकृत्स्नं कर्म** ॥ ६ ॥

अपनीते **दोषे** प्रायश्चित्तेन **पुनस्तत्कर्म कृत्स्नं** भवति-सकलं [क]भवति। यथा लोके छिन्नो हस्तो न पुनर्जायते क्षतसंरोपणमेव[8] क्रियते भेषजेन। इह पुनस्सकलं जायते कर्म प्रायश्चित्तेन फलदाने[9] समर्थं श्रुतिप्रत्ययात् ॥ ६ ॥

**तस्य नावचनात्पुनः प्रयोगः** ॥ ७ ॥

**तस्य** कर्मणोऽपनीतदोषस्य वचनादृते पुनः प्रयोगो न भवति[ख]। सकृत्प्रयोगस्त्वन्तरेणापि वचनं भवति[ग]। यथा कालातिपत्तौ कृत्वा [10]पाथिकृतं वैश्वानरञ्च पौर्णमासो दर्शो वा क्रियते। यथानस्य पर्वणो न कालो [11]विरुध्यत इत्युपदेशः[घ]। [12]एवमुपदिष्टं

1. B. 2. omits भवन्ति.
2. Ibid reads अनुक्रमात्.
3. B. 1. reads देयमित्यस्य.
4. B. 2. reads आनाज्ञातस्य.
5. B. 2. omits अत्र.
6. B. 1. reads दोषानन्तरं.
7. B. 1. reads पर्वापेक्षिणामिष्ट्यादीनामपि.
8. B. 1. reads इव.
9. B. 2. reads दानसमर्थं.
10. B. 3. reads पाथिकृतीं वैश्वानरीञ्च.
11. ibid अपरुध्यते.
12. B. 1. reads एवमपि शिष्टं.

क. प्रायश्चित्तेन दोषनिर्हरणे कृते कर्मवैगुण्यपरिहारात्फलदाने समर्थं कर्म भवतीति।

ख. "अन्यां दुग्ध्वा पुनर्होतव्यम्" इत्यादि वचनं यत्र नास्ति न तत्र पुनः प्रयोगः।

ग. गौणकालेऽप्यननुष्ठितस्य कर्मणः फलसाधनत्वासम्भवात् प्रायश्चित्तस्य च क्रियमाणकर्मवैगुण्यसमाधानमात्रत्वात्तावता फलसिध्यनुपपत्तेः सकृदनुष्ठानं कर्तव्यमेवेति।

घ. पूर्वस्य कर्मणस्स्वकालानुष्ठाने तस्योत्तरकर्मकालानुष्ठानेऽपि कालबाधप्रसङ्गात्परकर्मकालात्प्रागेव पूर्वस्यानुष्ठानमिति। स्वपक्षोऽप्ययमेव—परकर्मकालात्प्राक्पूर्वकर्मण ऽनुष्ठानसम्भवे कर्तव्यमेवेति।

निदानकारेणापि[क] 'सर्वमहः प्रातराहुतेः स्थानं सर्वा रात्रिस्सायमाहुतेः । आपूर्यमाणपक्षो दर्शस्य, कृष्णः पौर्णमासस्य, तथा पशुरपूर्णे संवत्सरे सोमश्च'इति । [ख]व्यवाये तु प्रायश्चित्तमेव क्रियते उत्तरेज्याधिकारार्थम् । [ग]अकाले [1]च कृतमकृतमिति न क्रियते तत्कर्म । ऊन्येनान्यस्य[2] कर्मणः कालोऽपरुद्ध इति । तथाऽङ्गमपरिसमाप्ते [3]प्रधाने क्रियते, परिसमाप्ते तु न कर्तव्यम्, [4]तदुपकारार्थत्वात्[घ] । द्रव्यसंस्कारस्तूपयुक्ते द्रव्ये लुप्यते, तदर्थत्वात् । अन्तरितप्रायश्चित्तन्तु हूयते, संस्कारलोपात् । संस्थिते प्रधाने यदङ्गं लुप्तं तस्यार्थे यत्र तु वचनं तत्र [5]पुनः प्रयोगोऽपि भवति । यथा "अन्यां दुग्ध्वा पुनर्होतव्यम् अथान्यामिष्टिमनुल्बणां तन्वीत" इति ॥ ७ ॥

**तुभ्यं ता अङ्गिरस्तमेत्यन्वाहिताग्निः प्रयास्यञ्जुहुयात् ॥ ८ ॥**

**अन्वाहिताग्निः** [6]कृताग्न्यन्वाधानः । तस्य यदावश्यम्भावि दैवाद्गमनं भवति स गमिष्यामीति जुहोति—"तुभ्यं त" [7]इति । वास्तोष्पतिप्रत्याम्नायः[ङ] ॥ ८ ॥

**पृथगरणिष्वग्नीन्समारोप्य प्रयाति ॥ ९ ॥**

---

1. B. 1. omits च.
2. B. 1. reads अन्येन कर्मणास्य.
3. B. 2. omits प्रधाने.
4. B. 2 and 3 read उपकारित्वात्.
5. B. 1. reads तु for पुनः.
6. B. 2. reads कृतान्वाधानः.
7. B. 2. reads इति जुहोति.

क. नित्यानां कर्मणामसकृत्कर्तव्यानां मुख्यकालातिपत्तौ आगामिकर्मकालात्प्राक् स्वरूपेणानुष्ठानं कर्तव्यमित्यनेन सूत्रेणोच्यते । न चेदं वचनं मुख्यकालविधायकम् 'आपदि हुतमित्येव प्रतीयात्' इत्युक्तत्वात् ।

ख. मुख्यगौणकालाननुष्ठाने प्रायश्चित्तमेव कर्तव्यं न तत्कर्मस्वरूपानुष्ठानम् । तत्र प्रायश्चित्तेनैव तत्कार्यसिद्धिः कल्प्यते उत्तरकर्मस्वधिकारसिध्यर्थम् । यावज्जीवाभ्यासेन नियतपूर्वापरवर्तिनां कर्मणां तत्तन्नियतकालेऽधिकारप्राप्तेः क्लृप्तपरत्वात्पूर्वाधिकारकार्यसिध्युत्तरकालमुत्तराधिकारप्राप्तिः । यद्यप्येतादृशाधिकारक्रमपरवचनं नास्ति "बृहस्पतिसवेनेष्ट्वा वाजपेयेन यजेत" इतिवत्, तथापि प्रयोगविधिना सामर्थ्यप्राप्तक्रमस्याप्यनुज्ञातत्वात्पूर्वकाले तत्कालवर्तिकर्माधिकारे प्राप्ते तत्साधनानुष्ठानस्यावश्यम्भावित्वात् तत्कार्यसिद्धावुत्तराधिकारः । अतः प्रायश्चित्तेनापि पूर्वाधिकारकार्ये सम्पन्ने उत्तराधिकारप्राप्तिरित्यभिप्रायः ।

ग. उत्तरकर्मकाले पूर्वकर्मानुष्ठानानन्तरमुत्तरकर्मानुष्ठाने पूर्वकर्मणोऽकृतत्वमेवेति न तत्क्रित इति ।

घ. प्रधानोपकारकत्वादङ्गस्य प्रधानप्रयोगसमाप्तेः पूर्वं व्युत्क्रमेणान्तरितप्रायश्चित्तं कृत्वा तत्कर्तव्यम् । परिसमाप्ते तु प्रधाने विस्मृतमङ्गं न कर्तव्यम्, बहिः प्रयोगे क्रियमाणस्योपकारकत्वाभावादिति ।

ङ. गमिष्यामीति सङ्कल्प्य यानेषु भाण्डानि समारोप्य वास्तोष्पतीयस्थाने "तुभ्यं त"इति जुहोति ।

[क]अधार्याणामपि समारोपणम्, अन्वाहितत्वात्। आत्मसमारोपणमपि लभ्यते। नेत्युपदेश.[ख] ॥ ९ ॥

**यत्र वसे[illegible]मिष्टिं संस्थापयेत् ॥ १० ॥**

यत्र वसतिरस्य भवति निर्भये तत्रेष्टिसंस्था, [ग]कृतान्तात्॥ १० ॥

**यद्यन्वाहिताग्नेरा[illegible]वनीयोऽनुगच्छेदन्वाग्नेरुषसामग्रमख्यदि-त्यन्यं प्रणीय भूरित्युपस्थाय यो अग्निं देववीतये हविष्मा२ऽआविवासति। तस्मै पावक मृडय स्वा[illegible]ति पूर्णं स्रुवं स[illegible] हुत्वा "इदं विष्णुर्विचक्रम" इत्या[illegible]ति [illegible]यात् ॥ ११ ॥**

अन्वाहिताग्नेरनुगमने प्रायश्चित्तं भूरित्युपस्थानं [घ]मनसा। स्रुवेण सर्वप्रायश्चित्तम्। समुच्चयेनापि न [1]हूयते सर्वप्रायश्चित्तमिति। केचित्त्वाहुः- [2]पूर्णश्च स्रुवं हुत्वा सर्वप्रायश्चित्तञ्चास्य[3] नियतं जुहोतीति ॥ ११ ॥

**जपेदित्येके ॥ १२ ॥**

**मनसा व्रतोपायनीयं यजुर्जपे[illegible] ॥ १३ ॥**

व्रतोपायने भवं यजुर्व्रतोपायनीयम् "[1]अग्ने व्रतपत" इति। यावद्वा [4]येनोक्तं तदेव मनसा केवलं जपति। यजमानार्थत्वाद्व्रतानां याजमानम्, "चरिष्यामि" इति [ङ]लिङ्गात्। 'योऽग्नीनन्वाधाय व्रतमुपैति स यदुद्वावयति विच्छिन्निरेवास्य सा' इत्यनुगते [5]व्रतविच्छेदाद्यजुषा तस्य सन्धानम्। [च]उपदेशस्तु- पूर्वं सर्वं व्रतोपायनीयं पुनर्यजमानस्येति। केचित्तु-व्रतोपायनीयं यजुरध्वर्युर्जपतीत्याहुः, यजमान इत्यवचनात् ॥ १३ ॥

---

1. B. 2 reads श्रूयते
2. Ibid पूर्णस्रुवं
3. Ibid अत्र नियतं
4. B. 1. reads येन नोक्तं
5. B. 1. reads व्रतच्छेदात्.

क. आहवनीयादीनामित्यर्थः।

ख. 'पृथगरणीषु' इति वि[illegible]वचनात् आत्मसमारोपणं नेत्युपदेशमतम्।

ग. पूर्वं यावत्कृतं तत ऊर्ध्वं कुर्यादित्यर्थः।

घ. "मनसोपतिष्ठेत मनो वै प्रजापतिः" इति श्रुतेः।

ङ. उत्तमपुरुषसामर्थ्याद्याजमानत्वं व्रतस्य। व्रतस्य विच्छेदे सति 'अग्ने व्रतपत" इति यजुषस्तत्सन्धायकत्वाद्यजुरपि याजमानमिति।

च. इष्ट्यर्थे-वेन पुनर्यजमानो व्रतोपायनीयं सर्वं यजुश्चतुष्टयं जपतीत्युपदेशमतम्।

1 'अग्ने व्रतपते व्रतं चरिष्यामि, वायो व्रतपते, आदित्य व्रतपते, व्रतानां व्रतपते व्रतं चरिष्यामि'।

**यः कश्चनानुगच्छेदेतदेव प्रणयनवर्जमावर्तेत ॥ मन्थेद्गार्ह-पत्यम् ॥ १४ ॥**

**या प्रकृतिर्दक्षिणाग्नेः ॥ १५ ॥**

यः कश्चनानुगच्छेदिति नान्वाहितप्रायश्चित्तम् । सभ्यावसथ्ययोस्सर्वप्रायश्चित्तमेव या प्रकृतिरितरेषामित्यवचनाद् द्वयोरेवानुक्रमणात्। निरवशेषवादात्सोमेऽपि दीक्षणीयोत्तरकाल-मन्वाहितप्रायश्चित्तमेव त्रयाणामपि। प्रणीते त्वौत्तरवेदिके यद्गार्हपत्यमुद्वा(स)येत्, अत एव पुनर्मन्थेदिति शालामुखीयस्य स्यात्। औत्तरवेदिकस्य त्वन्वाहितप्रायश्चितमेव, यावन्नाग्नी-ध्रीयप्रणयनमेतदेव प्रणयनवर्जमावर्तेतेति वचनात् यस्मिन् [1]कस्मिंश्चिदग्नावुपस्थानादि[2] सहोमकं क्रियतेऽदृष्टरूपसाधनत्वात्। इतरथा[3] आहवनीय एव हूयेरन्। केचित्तु होम आहवनीय [4]एवापरिहार्योऽयमिति ॥

**यद्याहिताग्नेरग्निरपक्षायेदा शम्यापरासात्परिव्राजपतिः कविर-ग्निरिति त्रिः प्रदक्षिणं परिक्रम्य तं सम्भरेदिदं त एकं पर उत एकं तृतीयेन ज्योतिषा संविशस्व। संवेशस्तनुवै चारुरेधि प्रिये देवानां परमे जनित्र इति ॥ १७ ॥**

[5]**अपक्षाणं** देशान्तरगमनम्, [क]अग्नेरविधानात्। अन्वाहिताग्नेरेव मा भूदपक्षाण-प्रायश्चित्तमिति सर्वार्थं पुनराहिताग्निग्रहणम्। आहिताग्नेरिति वचनाद् ब्राह्मौदनिके न भवतीत्युपदेशः[ख]। अन्वाहिताग्नेर्नापक्षाणविधिः, पुनराहिताग्निग्रहणात्[ग]। सोमे चित्येऽग्नौ च कालवृद्धिभयान्नापक्षाणविधिः। **शम्यापरासः** शम्याक्षेपः। यावच्छम्यया प्रविध्येत् तावति गते चाग्नौ प्रायश्चित्तम्। [6]उपदेशो मर्यादा शम्यापरासः। अर्वागपि प्रायश्चित्तम्।

---

1. B. 2. omits कस्मिंश्चित्.
2. B. 1. reads उपस्थानादि होमान्तं and omits अदृष्टरूपसाधनत्वात्.
3. B. 2. adds होमाः after इतरथा and omits एव.
4. B. 1. reads अपरिहारः.
5. B. 1. reads अवक्षाणं
6. B. 1. adds अग्नौ च after उपदेशः.

क. प्रणयनादिविधानमन्तरेणाग्नेरायतनाद्बहिर्गमनमपक्षाणम्।

ख. 'यद्यग्निरपक्षायेत्' इत्येतावतैव सर्वार्थसिद्धेराहिताग्निग्रहणाच्छ्रुतःवेऽपि ब्राह्मौदनिकावस्थायां न भवति प्रायश्चित्तम्।

ग. अन्वाहितावस्थाविशिष्टस्य नापक्षाणविधिः, आहिताग्निशब्दोपादानस्याहिताग्निमात्रे तात्पर्यात्।

यत्र परिक्रमणाय शक्यम् । परिक्रमणं सर्वतः प्रदक्षिणीकरणम् । [1]यस्मादग्निर्गतः तत्र क्षेपः[2] सम्भरणम् ॥ १७ ॥

**यदि परस्तरामपक्षायेदनुप्रयायावस्येत् ॥ १८ ॥**

**परस्तरां** परतश्शम्याप्रासात्[3] । **अनुप्रयाय** तं देशं गत्वा यत्र गतोऽग्निः । असमारूढा अग्नयः प्रत्यक्षं नीयन्ते, एकदेशस्य [4]समारोपणाशक्यत्वात् । [5]प्रवृत्तमित्यन्येऽपि प्रत्यक्षं नीयन्ते । केचित्तु अपक्षाणवर्जं समारोप्य नयन्ति, देशान्तरगमने समारोपणं दृष्टमिति । **अवसानं** तत्रैकमहस्तिष्ठति ॥ १८ ॥

**तदग्नये पुरोडाशमष्टाकपालं निर्वपेत् ॥ १९ ॥**

**पथोऽन्तिकाद्बर्हिराहरेत् ॥ २० ॥**

कृत्वा [6]पाथिकृतीम् । **पथोऽन्तिकात्** पथस्समीपात् **बर्हिः** । " [1]अग्ने नय " " [2]आ देवानाम् " इति पाथिकृतः, [7]प्राकृते स्विष्टकृतः ॥ १९, २० ॥

**अनड्वान् दक्षिणा । सिद्धमिष्टिस्सन्तिष्ठते ॥ २१ ॥**

यद्यग्निहोत्रमध्येऽवसानं कृत्वाऽग्निहोत्रसंस्था[क], तत इष्टिः । अथेष्टिमध्ये पशुमध्ये वा पथिकृतोऽपि तदेव तन्त्रमुपजीवति । नीत्वाग्नीन् कृतान्तात्प्रक्रमः । अथेष्टिमध्ये [8]सर्वप्रायश्चित्तम्, नान्येष्टिः " यस्य यज्ञे प्रतत " इति लिङ्गात्सर्वत्र ॥ २१ ॥

**ततः श्वोभूते गृहेषु प्रत्यवयति ॥ २२ ॥**

**श्वोभूते** श्वः प्रभाते गृहानागच्छति[9] । [10]सोमेऽपि दीक्षासु देवयजनम् ॥ २२ ॥

**यस्य हविषे वत्सा अपाकृता धयेयुस्तत्स्थाने वायव्यां यवागूं निर्वपेत् ॥ २३ ॥**

---

1. B. 2. reads यस्माग्निर्गतः.
2. Ibid wrongly reads पक्षेयः for प्रक्षेपः.
3. B. 2. reads परायात्.
4. Ibid समारोपणस्य.
5. Ibid प्रवृत्ति.
6. Ibid पाथिकृतं.
7. Ibid प्राकृतः स्विष्टकृत्.
8. B. 2. omits सर्वप्रायश्चित्तम्.
9. B. 2. and 3 read गच्छति.
10. B. 2. reads सोमोऽपि दीक्षितासु.

क. देशान्तर इति शेषः ।

१ अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥ (तै. सं. १.१.१४.३.)

२ आ देवानामपि पन्थामगन्म यच्छक्नवाम तदनु प्रवोळ्हुम् ।
अग्निर्विद्वान् त्स यजात् सेदु होता सो अध्वरान् त्स ऋतून् कल्पयाति ॥ (तै. सं. १.१.१४.३.)

यदि पिबेयुर्वत्सा अपाकृता। यदेज्या न संवर्तते तदा यवागूः। [क]अर्धपाने त्वन्तरितप्रायश्चित्तम्, सर्वप्रायश्चित्तञ्च [1]हूयते। यवागूः व्रीहिभिरपि [2]बालपेया[ख]। [3]सान्नाय्ये पूर्वनिर्वापादयस्त्वर्थलोपान्निवृत्ताः, न शास्त्रात्। इह तु तस्यौषधगुणत्वात्क्रियन्ते [4]निष्पत्त्यर्थत्वाद्धविषः[ग]। उद्वासनोत्तरकालन्तु सान्नाय्यधर्मा एव, स्थानापत्तेः। अन्ये त्वाहुः तिरः पवित्रसेकादयस्सान्नाय्यधर्मा एव स्थानापत्तेः, नार्थलुप्ता इति। शाखाहरणादयस्तु दोहनान्ता[5] अर्थलुप्ता इति न क्रियन्ते। निर्वापणादयस्तु तण्डुलोत्पादनान्ता[6] अर्थलोपात्सान्नाय्यापूर्वनिवृत्ताः। इह त्वौषधगुणा[7] उपकुर्वन्तीति क्रियन्ते। "[1]वायो शतम्" "[2]प्र याभिः" इति वायोः। हुतानुमन्त्रणं सान्नाय्यवत्। [8]नानादेवतत्वात्पृथक्प्रदानम्[9]। सान्नाय्यस्य यदा तु दोहद्वयं पिबन्ति वत्सास्तदा यवाग्वोरेकदे[10]वतत्वात्सह प्रदानम् ॥ २३ ॥

---

1. B. 2. reads हूयत इति.
2. Ibid wrongly reads बालेपेया.
3. B. 1. reads सान्नाय्यापूर्वान्निर्वपणादयः.
4. Ibid निरयार्थत्वात्.
5. B. 2. reads दोहनार्थाः.
6. B. 1. तण्डुलोत्पादनान्ताः.
7. B. 2. reads गुणवत्.
8. Ibid भिन्न.
9. Ibid प्रधानं.
10. Ibid दैवतत्वात्.

क. एकदेशपरोऽर्धशब्दः, यागमात्रद्रव्यसम्भवेऽपि प्रायश्चित्तं कृत्वा दोहनादि कर्तव्यम्। सर्वप्रायश्चित्तन्तु समुच्चयपक्षे यागनिवृत्तिसम्भवेऽपि "नास्यैतां रात्रिं कुमारा अपि पयो लभन्ते" इति सर्वस्य पयसो दोह्यत्वादेकदेशविनाशेऽपि प्रायश्चित्तं भवत्येवेति।

ख. घनीभावनिवृत्त्यर्थं बालपेयेति। यथा बाला अपि पिबेयुस्तथा यवागूस्सम्पादनीया। सापि यवैरेवेति न, किन्तु व्रीहिभिरपि सम्पादयितुं शक्यत इत्यर्थः।

ग. निर्वापावघातादयस्सन्निपत्योपकारका धर्मा दर्शपूर्णमासप्रकरणे पठिताः प्रकरणात्सर्वयागार्थत्वं भजमाना अपि "व्रीहीनवहन्ति" "चतुरो मुष्टीन्निर्वपति" इत्यादिविनियोजकवाक्यसामर्थ्यादौषधद्रव्यकयागार्थत्वमेव तेषाम्। ईदृशयागार्थत्वमपि न स्वरूपेण, आनर्थक्यापातात्, किन्तु तत्तद्यागजन्योत्पत्त्यपूर्वार्थत्वमेव स्वीकर्तव्यम्। तथा सति सान्नाय्यापूर्वप्रयुक्तत्वं निर्वापादीनां न प्राप्नोति, सान्नाय्ययागस्यौषधद्रव्यकत्वाभावात् इति यद्यपीयं स्थितिः तथापि प्रकृते नैमित्तिकप्रयोगे सान्नाय्ययागस्य यवागूद्रव्यं देवतान्तरञ्च विहितम्। तत्र यवाग्वा निष्पत्त्यर्थमवघातनिर्वापादीनामपेक्षितत्वाद् द्वारत्वात्तेषां सान्नाय्यापूर्वार्थत्वमपि प्राप्तमुपदेशत एव। न चास्य कर्मणो विकृतिरूपत्वम्, प्रकृतिभूतस्यैव कर्मणोऽभ्युदयेष्टिवद् देवतान्तरविशिष्टप्रयोगमात्रोपदेशात्। अत उपदेशत एवौषधधर्मा अत्र क्रियन्त इति।

१ वायो शत[ँ]हरीणां युवस्व पोष्याणाम्।
उत वा ते सहस्रिणो रथ आयातु पाजसा ॥ (तै. सं. २.२.१२.७)

२ प्र याभिर्यासि दाश्वा[ँ]समच्छा नियुद्भिर्वायविष्टये दुरोणे।
नि नो रयि[ँ] सभोजसं युवेह निवीरवद्गव्यमश्वियं च राधः ॥ (तै. सं. २.२.१२.८)

**अथोत्तरस्मै हविषे वत्सानपाकृत्योपवसेत् ॥ २४ ॥**

**उत्तरं हविः** । पुनरावृत्तिस्सर्वस्य दर्शस्य, हविश्शब्दस्य [क]प्रदर्शनार्थत्वात्[1] । प्रणयनादिब्राह्मणभोजनान्तं तत्संस्थाप्यान्यद्धविः 'तद्दैवतं निर्वपेत्' इत्यत्र तद्दैवतवचनात् । केचित्तु [illegible] दधि पयो वा पुनरावर्तयन्ति, इतरयोरदुष्टत्वात् । अन्ये तु प्रधानेज्यां कृत्वा तदैव वत्सापाकरणादीन्यावर्तयन्ति । तेन चेष्ट्वा शेषं सर्वप्रधानानां तन्त्रेण ॥ २४ ॥

**यस्य सायं दुग्धं हविरार्तिमाच्छेतीन्द्राय व्रीहीन्निरुप्योपवसेत् ॥ २५ ॥**

सायं दोहस्यार्तिः नाशो दोषोऽपहरणं वा । इन्द्रायेति [ख]प्रदर्शनम् । महेन्द्रयाजिनः महेन्द्रायेति । व्रीहीनिति [ग]वचनाद्यवकालेऽपि व्रीहय एव निरुप्यन्ते । निर्वापं कृत्वा ग्राम्येभ्य उपवसति आरण्याशनं करोति । अथ तु कृते,[घ] विनाशे निर्वाप[2] एव क्रियते । अन्यश्चाप्यार्तिगताबनन्तरं निर्वापः । दर्भानास्तीर्य, अग्नीहोत्रहवणीं[3] शूर्पञ्चापरतः । पुरतः पात्रीं यदि पात्र्यां निर्वापः[4] । "संविशन्ताम्" इत्यभिमृश्य वाग्यतः स्रुगादानादि अन्वावापनान्तमिन्द्राय कृत्वा विरमति । श्वोभूते यथाप्रकृति कृत्वा[5] वाग्यतः [6]पात्राण्यभिमृश्यासंमृष्टान्याग्नेयनिर्वापादि प्रतिपद्यते ॥ २५ ॥

**यत्प्रातस्स्यात्तच्छृतं कुर्यात् ॥ २६ ॥**

व्रीहयः[ङ]प्रवृत्ताः सान्नाय्यस्य प्रतिनिधिरिति प्रातर्दोहेऽपि त एव स्युः, अत उच्यते—

---

1. Ibid संप्रदर्शनार्थत्वात्. B. 1. हविश्शब्दसंसर्गित्वात्.
2. B. 1. reads निर्वापण.
3. B. 2. reads शूर्पञ्च परतः पात्री.
4. B. 1. reads रक्ष्यश्च पश्चात् after निर्वापः.
5. B. 3. omits कृत्वा.
6. B. 2. reads पात्राणि संमृष्टानि.

क. 'उत्तरस्मै हविषे' इत्येकवचनश्रवणेऽपि हविश्शब्दस्यैकवचननिर्दिष्टस्य प्रदर्शनार्थत्वात्कृत्स्नप्रयोगावृत्तिरिति ।

ख. सदेवताके यागे द्रव्यमात्रं प्रतिनिधीयते । तेन सान्नाय्ययाजिमात्रस्य नैमित्तिकमिदं कर्म सिध्यति । इन्द्रायेति देवतानिर्देशाभावे प्रकृतत्वाद्यवागूदेवतैवात्रापि प्राप्नुयात् । अतस्सान्नाय्यस्य देवताप्रदर्शनार्थमिन्द्रायेति निर्देशः ।

ग. निर्वपतिचोदनया व्रीहियवयोरुभयोः प्राप्तौ सत्यां व्रीहीनिति वचनान्नियमः क्रियते "सोमाभावे पूतिकानभिषुणुयादि" तिवत् । तेन यवकालेऽपि व्रीहय एव निरुप्यन्त इति ।

घ. कृते तूपवासे पश्चाद्यदि सायं दोहार्तिस्तर्हि निर्वाप एव नोपवासः ।

ङ. "इन्द्रस्य वृत्रं जघ्नुषः" (तै. स. २.५.३.२.) इति सान्नाय्योत्पत्तिब्राह्मणे सान्नाय्येन सह व्रीहीणामप्युत्पत्तिः प्रदर्शिता । अतस्तुल्यधर्मतया प्रतिनिधिरूपेणैकस्मिन् सायं दोहे प्रवृत्ता व्रीहयः

यत्प्रातस्स्यात्तच्छृतं कुर्यादिति ॥ २६ ॥

**अथेतर ऐन्द्रः पुरोडाशस्स्यात् ॥ २७ ॥**

**इतरः** कृतनिर्वाप ऐन्द्रो वा माहेन्द्रो वा पुरोडाशः क्रियते। [क]प्रतिनिधित्वात्सान्नाय्यधर्मा एव यवाग्वादीनां पञ्चशरावपर्यन्तानाम्। येस्तु हविरिसिद्धिस्त ओषधिधर्मा अपि कार्यास्तद्द्वारम् इति ॥ २७ ॥

**तस्य प्रातर्दोहेन समवदाय प्रचरेत् ॥ २८ ॥**

**एतदेव प्रातर्दोह आर्तिगते प्रायश्चित्तम् ॥ २९ ॥**

**सायं दोहेनास्य समवदाय प्रचरेत् ॥ ३० ॥**

दोहेन [ख]सह प्रदानं पुरोडाशस्य। अत्रापि पुनरिज्या। श्रुतेः 'अथोत्तरस्मै हविषे वत्सानपाकुर्यादि'ति। यद्यपि नोद्दिष्टा [ग]सूत्रकारेण, वत्सापाकरणग्रहणञ्च पुनरिज्याप्रदर्शनार्थं सर्वत्र[घ] ॥ २८–३० ॥

**यस्योभौ दोहावार्तिमार्च्छेयातामाग्नेयमष्टाकपालं निर्वपेदैन्द्रं पञ्चशरावमोदनम् ॥ ३१ ॥**

[ङ]युगपदुभयोरार्तौ पञ्चशरावः। [च]यदा तु कृते पुरोडाशे दोहनाशः, तदा द्वितीयो-

---

प्रातर्दोहेऽपि भवेयुरित्याशङ्क्य समाधीयते–अनयोर्भिन्नयागत्वाद्यदीयद्रव्यस्य दोषः तस्यैव प्रतिनिधिर्युक्त इति।

क. यवाग्वादयः पञ्चशरावपर्यन्तास्सान्नाय्यप्रतिनिधयः। प्रतिनिधीनां 'प्रतिनिधिश्च तद्वत्' (जै. सू.-३.६.१४.) इत्यधिकरणे मुख्यद्रव्यसमानविधानत्वं सिद्धान्तितं जैमिनिना। अतःप्रतिनिधिषूपदेशेनैव धर्माणां प्राप्तौ विनियोगशास्त्रार्थनिरूपणपर्यवसानं भवति। एवं विकृतिप्राप्त्यपेक्षायां तु अवघाताद्युपदेशनिरूपणपर्यवसानम्–यदीयोऽवघातः, तदीयं हविः प्रकृतिद्रव्यसंस्कार्यमिति। अतो यथासम्भवं सान्नाय्यधर्माः। हविरुत्पत्त्यर्थत्वेन त्वोषधधर्मा अपि कार्यास्तद्द्वारमिति।

ख. सम्प्रतिपन्नदेवताकत्वाद् दोहद्वयवत्सहप्रदानमित्यर्थः।

ग. पुनरिज्येति शेषः

घ. 'यस्य सायं दुग्धम्' इति सूत्रकारेणास्मच्छाखानुवादेन प्रत्यभिज्ञाप्रदर्शनादस्मच्छाखायाश्च 'उत्तरस्मै हविषे वत्सान्" इत्युपदेशात्सर्वत्र वत्सापाकरणग्रहणं पुनरिज्याप्रदर्शनार्थमिति।

ङ. एकनाशप्रयुक्तनैमित्तिकेऽनारब्धे सति यदा द्वितीयस्यापि नाशो भवति तदा नाशक्रमेण युगपद्विनियोगः।

च. प्रथममन्यतरार्तौ सत्यां तन्नैमित्तिके पुरोडाशे निष्पन्ने द्वितीयार्तिर्यदा भवति तदा पुनरप्यैन्द्र एव पुरोडाशः, न पञ्चशराव ओदन इति।

ऽप्यैन्द्र एव पुरोडाशः। शरावो मुष्टिस्रुक्प्रत्याम्नायो [क]मल्लकः। त्रीणि समन्त्राणि द्वे तूष्णीकविकारे, 'द्वादशमन्त्रेण' इति [ख]दर्शनात्॥ ३१॥

**अग्निं पुरोडाशेन यजेत, इन्द्रं पञ्चशरावेण॥ ३२॥**

[ग]द्वितीय आग्नेयः, कपालोपधाने कृते पूर्वस्याग्नेयस्य प्रातर्दोहोत्पत्तिः[1]। अन्ये त्वाहुः—एक एवाग्नेयः, शाखान्तरे प्रातर्दोहोत्पत्तिः प्रातरग्निहोत्रकाल[2] उपदिष्टा। यदा निरुप्त आग्नेय उभयोर्नाशः तदाग्नेयं निरुप्य [3]पञ्चशरावः। उत्पन्ने त्वाग्नेये यदा [4]दोहनाशस्तदा पञ्चशराव एव केवल इति। उभयोराग्नेययोस्सहप्रदानं [घ]विभवात्॥ ३२॥

**पञ्चशरावेण वोभे देवते यजेत॥ ३३॥**

**अथोत्तरस्मै हविषे वत्सानपाकृत्योपवसेत्॥ ३४॥**

यदापि पञ्चशरावेणोभे देवते, तदाप्याग्नेयस्य पञ्चशरावस्य [5]चैकदैवतत्वात्सह प्रदानम्। केचित्त्वाहुः—'अग्निं पुरोडाशेन यजेत' इति पुरोडाशाभ्यामित्यवचनान्न[6] सह प्रदानमाग्नेययोरिति। इन्द्राय निरुप्य [7]तेनाग्निश्चेन्द्रश्च पश्चादिज्येते। केचित्त्वाहुः—इन्द्राय व्रीहीन्निरुप्य रात्रौ सङ्कल्पमात्रमिन्द्रायकुर्वन्ति, काल एव निर्वापः। तदनुपपन्नम्; पय एवारभ्य गृहीत्वोपवसतीति ग्रहणं हि निर्वापः,[8] '[ङ]यस्या गृहीतं हविरभ्युदियादि'ति। न्या-

---

1. B. 2. reads उत्पत्तेः.
2. B. 1. wrongly reads अग्निहोत्रकालोपदिष्टायदा.
3. B. 2. omits पञ्च.
4. Ibid दोह.
5. B. 1. reads चैकत्वात्.
6. B. 3. reads अवचनात्पृथग्दानं
7. B. 1. reads तेनाग्नयेऽग्निश्चेन्द्रश्च.
8. B. 1. and 3 read निर्वाप एव.

क. 'मल्लक' इति भाषायाम्

ख. वाजपेये बार्हस्पत्यस्सप्तदशशरावो नैवारश्चरुर्विहितः। तत्र द्वादशमन्त्रेण तूष्णीमितराणि' इति सूत्रकारेणोक्तम्। सप्तदशशरावः प्राकृतमुष्टिविकारः। प्रकृतौ च चतुर्षु मुष्टिषु त्रयाणां समन्त्रकत्वं चतुर्थस्य तूष्णीकत्वमस्ति। तथैव सप्तदशशरावेऽपि समन्त्रकत्वतूष्णीकत्वयोः प्राप्तौ सत्यां 'द्वादश मन्त्रेण तूष्णीमितराणि' इत्युक्तम्। तेनैव न्यायेन प्रकृतनैमित्तिकप्रयोगेऽपि द्वे तूष्णीकविकारे।

ग. नित्यादाग्नेयादयमन्यः, न तु नित्यानुवादः। नित्यस्याग्नेयस्य कपालोपधानोत्तरकालं प्रातर्दोहोत्पत्तेर्नित्यस्य निर्वापकाले उभयोरार्तिसम्भवात्तन्निमित्ताग्नेयो नित्याद्भिन्न एव भवति इति। अन्येषान्तु मते एक एवाग्नेयः। शाखान्तरे प्रातर्दोहोत्पत्तिः प्रातरग्निहोत्रकाल एवोपदिष्टा। अत आग्नेयनिर्वापात्प्रागेवोभयार्तिसम्भवान्नित्यानुवाद इति।

घ. एकदेवताकत्वादुभयोस्सह प्रदानसम्भवान्नित्यस्य नैमित्तिकस्य च सह प्रदानमिति।

ङ. ग्रहणस्य निर्वापपरत्वे प्रमाणं 'यस्या' इति।

यस्तु–यवागूः ऐन्द्रः पुरोडाशः पञ्चशरावश्चाङ्गविधयः, एते निमित्तसंयोगार्थाः। आग्नेयविकारो यवागूः, ऐन्द्रः पुरोडाशः पञ्चशरावश्चैन्द्राग्नविकारौ, न सान्नाय्यस्थाने ॥ ३३, ३४ ॥

इति प्रथमा कण्डिका

**यस्य व्रत्येऽहन् पत्न्यनालम्भुका स्यात्तामपरुध्य यजेत ॥ १ ॥**

[क]**व्रत्यमहः** व्रतोपायनप्रभृति यावद्व्रतविसर्गं[1] इति। **अनालम्भुका** आर्तवोपजनने नालभते भाण्डादीनिति। **अपरुध्य** [2]यजेत न तां [ख]पत्नीकार्याणि कारयेत् ॥ १ ॥

**जघनेन वेदिमन्तर्वेदि वोदक् शुल्बं संनहनं स्तृणीयात् ॥ २ ॥**

---

1. B. 2. omits विसर्गः 2. B. 1. and 2 read यजेतेति तां पत्नीं कारयेत्.

क. पूर्णमासे बर्हिष्या हिरमाणेऽमावास्यायां कृते च वत्सापाकरणे व्रतोपायनं भवति ( See आप. श्रौ. ४.२.६ ) व्रतविसर्गश्च यज्ञविमोकानन्तरम्। ( See आप. श्रौ. ४.१६.११ ) व्रतोपायनादूर्ध्वं पत्न्या रजस्युत्पन्ने तामपरुध्य–निरसार्य याग इति भाष्यात्प्रतीयते।

'प्रक्रान्तमग्निहोत्रादि यत्किंचिच्छ्रुतिचोदितम्।
आर्तवाभिप्लुतां नारीं विहाय कुरुते द्विजः' ॥

इति स्मृत्यनुसारेण तु प्रक्रान्ते कर्मणि सङ्कल्पपूर्वमेव तथाविधां पत्नीं विहाय याग इति प्रतीयते। अत्र किं व्रतोपायनादूर्ध्वं पूर्वोक्तनिमित्ते जातेऽपरुध्य यागः, उत सङ्कल्पपूर्वमेवेति संशयो भवति। अत्रायं समन्वयः–दर्शपूर्णमासयोर्यावज्जीवसङ्कल्पदशायां पत्न्याः प्रतिमासं रजःप्रादुर्भावमङ्गीकृत्यैव यावज्जीवाधिकारात् "अनालम्भुका भवति" ( तै. ब्रा. ३.७.१ ) इति वर्तमानापदेशाच्च तत्र प्रयोगसङ्कल्पात्पूर्वं रजस्युत्पन्नेऽपि अपरुध्य यागः, मुख्यकालातिक्रमस्यायुक्तत्वात्। यैश्च यावज्जीवमेकसङ्कल्पे प्रमाणाभावात् प्रतिप्रयोगमधिकारभेदेन सङ्कल्पभेद इति विभाव्यते तेषामपि मते सङ्कल्पादूर्ध्वं रजस्वला चेदपरुध्य याग एव। 'व्रतोपायनप्रभृति यावद्विसर्गः' इति भाष्यन्तु सूत्रस्य 'व्रत्य' शब्दनिर्वचनपरम्, अन्यथा व्रतविसर्गानन्तरे रजस्युत्पन्ने कर्मविरोधसम्भवात् कर्मसमापनं न स्यात्। यदि च व्रतविसर्गादूर्ध्वं पत्नी कार्याभावात्कर्मसमापने न विरोध इति विभाव्येत, तर्हि व्रतविसर्गात्पूर्वमपि पुच्छिताशीर्युपस्थानादूर्ध्वं पत्नीकार्याभावाद् 'यावद्विसर्ग' इत्यविवक्षितं स्यात्। तस्माद्व्रत्यकालेऽनालम्भुकत्वमात्रं विवक्षितम्, न पुनस्तदानीमेव रजस उत्पत्तिः। अत एव 'अन्वगवधानप्रभृत्यवरुध्य यजेत' इति भगवान् बोधायनः। तच्चारब्धे कर्मणि संकल्पिते रजस्वला चेत्तां विहाय कर्म कर्तव्यमेव। 'यस्य व्रत्येऽहन्' इति ब्राह्मणानुकरणं सूत्रकारस्य, सूत्रस्थव्रत्यशब्दनिर्वचनप्रदर्शनञ्च भाष्यकारस्य कर्मकालोपलक्षणार्थमेवेति।

ख. पत्नीकार्याणि-आज्यावेक्षणादीनि, पत्नीसंस्कारासंनहनादयः। अत्र 'प्रोक्षणीरासादयेध्मान्बर्हिरुपसादय स्रुवञ्च स्रुचश्च संमृड्ढि पत्नीं संनह्याज्येनोदेहि' इति प्रैषे पत्नीं संनह्येति पदद्वयनिवृत्तिः, प्रैषे प्रयोजनभेदेन मन्त्राणां भिन्नत्वात्। अत एतेषां लोपेऽपि कर्म समापनीयमेव।

**जघनेन वेदिं** पश्चाद्वेदेः। अन्तर्वा[1] वेदेः। [क]उदक् शुल्बम् उदगग्रं शुल्बे निपातितेऽपि[2] उदग्भवति, उदगग्रस्य पत्नीयोक्त्रस्य[ख] ॥ २ ॥

**यदा त्रिरात्रीणा स्यादथैनामुपह्वयेत "[1]अमूहमस्मि सा त्वं द्यौरहं पृथिवी त्वं सामाहमृक्त्वं तावेहि सम्भवाव सह रेतो दधावहै पुंसे पुत्राय वेत्तवै रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय" इति ॥ ३ ॥**

**त्रिरात्रीणा** त्रिरात्रातीता, यदहः करोत्यृतुगमनम्। इष्ट्वोपह्वयेतेत्यनन्तरं स्यात्[ग]। अतस्त्रिरात्रीणेत्युच्यते। [3]व्याहरणमेवैतैर्मन्त्रैर्मिथुनार्थमुपह्वानम्। पश्चादभिमन्त्रणं "विष्णुर्योनिं कल्पयतु" इति ॥ ३ ॥

**यस्याग्निहोत्रं सान्नाय्यं वा विष्यन्देतोदङ् परेत्य वल्मीकवपामुद्धृत्य "[2]प्रजापते न त्वदेतानि" इति प्राजापत्ययर्चा वल्मीकवपामवनीय "भूः" इत्युपस्थ यान्यां दुग्ध्वा पुनर्जुहुयात्। यदि सान्नाय्यमन्यदागमयेत् ॥ ४ ॥**

उद्वर्तमानस्य विविधं स्यन्दनं **विष्यन्दनम्**। यदि प्राप्नोत्यग्निं भूमिं वा, उद्गत्वा यो वल्मीकः तस्य वपायाम्। वम्रीभिरुद्धृता[4] मृत्तिका वल्मीकवपा। उद्धननं तस्या अपनयनम्। [5]वल्मीक एव वल्मीकवपा तस्या उद्धननम्। यथा बिलमपाह्रियेत[6]। "प्रजापत" इति बिले क्षेपस्सर्वस्य। न च स्वाहाकारः, होमो न भवतीति[घ]। भूरित्युपस्थानमुपांशु[ङ]। हविस्संस्कारो [7]दोहनेन विनाप्यन्यस्यागमः[8], सान्नाय्यस्य कुम्भ्याम-

1. B. 1. and 2. read अन्तर्वेदि.
2. B. 2. omits अपि
3. B. 1. reads व्याहरणमेभिः
4. B. 1. reads उद्धृत्य वल्मीकवपामृत्तिका
5. B. 2. omits वल्मीक एव
6. B. 1. reads अपाह्रियते
7. B. 3. reads दोहनं
8. B. 2. omits आगमः

क. शुल्बं सन्नहनसाधनं योक्त्रम्। उदक् उदग्देशे स्तरणं न भवति, किन्तूदगग्रस्तरणमेव। अन्यथा 'जघनेन वेदिम्' इति विरोधात्।

ख. स्तरणादिति शेषः। ग. ऋतुगमनमिति शेषः।

घ. यद्यपि 'प्राजापत्यये'ति निर्देशाद् देवतास्मरणम्, तथापि 'अवनीय' इत्यवनयविधानेन होमरूपत्वाभावान्न स्वाहाकारः। अतोऽन्यत्रापि होमचोदनारहितेषु न स्वाहाकारः न वा देवतानिर्देशः।

ङ "भूरित्याह भूतो वै प्रजापतिः" (तै. ब्रा. ३.७.२ १.) इत्यर्थवादे भूरित्यस्य प्राजापत्यत्वकीर्तनात् "यत्किञ्चित्प्राजापत्यम्" इति तस्योपांशुत्वम्।

१ तै. ब्रा. ३.७.१.९

२ प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥ (तै. ब्रा. ३.५.७.१.)

धिश्रयणादि[1क] ॥ ४ ॥

**यदि कीटोऽवपद्येत मध्यमेनान्तमेन वा पलाशपर्णेन "[1]मही द्यौः पृथिवी च नः" इति द्यावापृथिव्ययर्चान्तःपरिधि निनीयान्यां दुग्ध्वा पुनर्जुहुयात् । यदि सान्नाय्यमन्यदागमयेत् ॥ ५ ॥**

**कीटः** अमेध्यसेवी यदि पतति पिण्डसंवर्तकः, अग्निहोत्रे सान्नाय्ये वा । अन्तःपरिधीति देशमात्रं मध्यमपरिधिदेशस्य[ख] ॥ ५ ॥

**[2]यस्याग्निहोत्रमववर्षेत् "मित्रो जनान्कल्पयति प्रजानन्मित्रो दाधार पृथिवीमुत द्याम् । मित्रः कृष्टीरनिमिषाभिचष्टे सत्याय हव्यं घृतवज्जुहोत" इति तत्कृत्वान्यां दुग्ध्वा पुनर्जुहुयात् ॥ ६ ॥**

[ग]पुनरग्निहोत्रवचनान्न सान्नाय्यस्याववृष्टस्य प्रायश्चित्तम् । "स जुहुयादि"ति श्रुतेः "मित्रो जनान् कल्पयति प्रजानन्" इति [घ]पूर्वाहुतिः । संस्थाप्य मार्जनान्तं पुनर्होमो विहरणादिमार्जनान्तः । [ङ]उपदेशो [2]वृष्टयन्तः पूर्वहोमः, द्वितीयो दोहनादि मार्जनान्त इति ॥६॥

---

1. B. 2. and 3 read प्रभृति.    2. B. 3. reads पूर्वो वृष्टयन्तो होमः.

क. यद्यपि 'यदि सान्नाय्यमन्यदागमयेत्' इति पयसः प्रक्षेपमात्रविधिः, तथापि कुम्भ्या अपनीतस्थात्पुनरधिश्रयणादि समन्त्रकं दोहनव्यतिरिक्तसंस्कारः । अग्निहोत्रे तु वल्मीकवपायामवनीय तदन्तमुत्सृज्य पुनर्होम इति ।

ख. उपलक्षणमिति शेषः ।

ग. अववृष्टम् अवपतितेन वर्षेण दूषितमग्निहोत्रसम्बन्धि हविः, न तु सान्नाय्यम् । विष्यन्दनकीटपतननिमित्तं प्रायश्चित्तमग्निहोत्रे सान्नाय्ये चोपदिष्टम् । तथाववृष्टनिमित्तं प्रायश्चित्तं नोभयोः किन्त्वग्निहोत्र एव । अत एव सूत्रेऽग्निहोत्रशब्दः पुनरुपात्तः ।

घ. ब्राह्मणेऽववृष्टेन द्रव्येण किं होतव्यमुत न होतव्यमिति सन्दिह्य, तेनैव द्रव्येण होमे सम्पाद्यमाने शरीरे कुरूपप्राप्तिः, होमस्याकरणे यज्ञविच्छेद इति पक्षद्वयेऽपि दोषमभिधाय तन्निवृत्तये "मित्रो जनान्" इति मन्त्रेण "स जुहुयात्" इति होमो विहितः । सूत्रकारस्तु 'तत्कृत्वा' इत्येव निर्दिशति, न होमकरणमुपदिशति । तथापि "स जुहुयादि"ति श्रुतिबलेन "मित्रो जनान्" इत्यववृष्टेन पूर्वाहुतिं हुत्वा मार्जनान्तं समाप्य विहरणादिमार्जनान्तः पुनर्होमः कर्तव्य इति ।

ङ. अववृष्टप्रायश्चित्ततया नैमित्तिकः पूर्वहोमः कर्तव्यः । तत्र मन्त्रान्तरञ्च विहितम् "मित्रो जनान्" इति । अनेन देवतान्तरानुप्रवेशे जाते नित्यहोमस्याकृतत्वात् अग्निहोत्रप्रकरणे "वृष्टिरसि वृश्च मे पाप्मानमृतात्सत्यमुपागाम् इति हुत्वाऽप उपस्पृश्य" (आप. श्रौ. ६.११.४) इति पुनर्वचनस्य

१ मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ॥ (तै. सं. ३.५.११.३.)
२ तै. ब्रा. ३.७.२.३.

[1]यदि पूर्वस्यामाहुत्यां हुतायामुत्तराहुतिः स्कन्द्यदि वान्त या पूर्वामभिजुहुयात् "यत्र वेत्थ वनस्पते देवानां गुह्या नामानि । तत्र हव्यानि गमय" इति वान पत्ययर्चा समिधमाधाय तत एव तूष्णीं हुत्वान्यां दुग्ध्वा पुनर्जुहुयात् ॥ ७ ॥

**हुतायां** पूर्वाहुतौ यद्युत्तराहुतिः **स्कन्दति** [1]पतति भूमौ । **अभिहोमः** उपरि होमः । **उत्तरया** पूर्वस्याः । वानस्पत्ययेति परिज्ञानार्थम् । **तत एव** [2]स्रुग्गता-त्स्कन्नशेषात् तूष्णीमुत्तराहुतिः । यदाप्यभिहोमः कृतः, पूर्वोक्त एव पुनर्होमविधिस्सर्वत्र ॥७॥

यदि पूर्वस्यामाहुत्यां हुतायामाहवनीयोऽनुगच्छेदाग्नेदारौ दारावग्निरिति वदन्ननन्तरे शकले हिरण्ये वा जुहुयात् ॥ ८ ॥

"अग्निर्दारौ दारावग्निः" इत्युत्तराहुतिः । [3]वदन्निति वचनान्न मन्त्रान्तेन । अनन्तरं शकलं यतः पश्चादनुगच्छत्यग्निः, हिरण्ये वा होमः । [क][4]गार्हपत्यदक्षिणाग्न्योर्होम-समाप्ति[5]ः । तपनेन्धनपरिसमूहनपरिषेचननिवृत्तिराहवनीयाभावात् उष्मपास्सप्तर्षय इति तपननिवृत्तेरुद्देशस्यापि निवृत्तिः । न वा निष्टपनमुद्देशार्थम्[6] 'निष्टपति[2] स्वगाकृत्या' इति [7]शंयुवाकार्थे श्रूयते । एवं सत्युद्देशनमनिष्टापत्यया क्रियते । सप्तर्षितृप्तय उद्दिशति 'सप्तर्षी-नेव प्रीणाती'ति । केचित्तु तपनेन्धनवर्जं सर्वं कुर्वन्ति । शकले हिरण्ये वा[illegible]ति-निधिरिति । एतदेव प्रायश्चित्तमनुगतेष्टिः । समासे विकल्पे न सर्वत्रानुगतेष्टिमेतामेक इति ॥ ८ ॥

[3]यदि पुरा प्रयाजेभ्यो बर्हिः परिध्यङ्गारः स्कन्देत् स्रुवस्य बुध्नेनाभिनिदध्यात् "मा तमो मा यज्ञस्तमन्मा यजमानस्तमन्नमस्ते अस्त्वायते नमो रुद्र परायते नमो यत्र निषीदसि । अध्वर्युं मा

1. B. 2. omits पतति.
2. B. 1. reads स्कन्दन.
3. B. 2. reads उत्तराहुतिं वदन्ति वचनान्तमन्त्रान्ते.
4. B. 1. reads गार्हपत्यस्य दक्षिणाग्नेः.
5. B. 3. reads परिसमाप्तिः.
6. B. 1. reads उद्देशार्थत्वात्.
7. B. 3. reads शंयुवाककार्ये.

तदनन्तरनैमित्तिकनिवेशार्थत्वात्कालबाधप्रसङ्गाच्च पूर्वो न कृत्स्नसंस्थः किन्तु सृष्टयन्त एव । द्वितीयस्तु दोहनात्पूर्वभाविनां पदार्थानां कृतत्वात् द्रव्यमात्रस्यापेक्षितत्वाद् दोहनादि मार्जनान्त इत्युपदेशमतम् ।

क. शकलापरिज्ञाने गार्हपत्यदक्षिणाग्न्योर्होमः ।

१ तै. ब्रा. ३.७.२.३. २ तै. ब्रा. २.१.४.८.
३ तै. ब्रा. ३.७.२.४.

**हिंसीर्यजमानं मा हिंसीः" इति यदि पुरस्तात्। "ब्रह्माणं मा हिंसीर्यजमानं मा हिंसीः" इति यदि दक्षिणतः। "होतारं मा हिंसीः पत्नीं मा हिंसीर्यजमानं मा हिंसीः" इति यदि पश्चात्। "आग्नीध्रं मा हिंसीः पशून् मा हिंसीर्यजमानं मा हिंसीः" इति यद्युत्तरतः॥९॥**

पुरा प्रयाजेभ्य इति यावत्प्रयाजा नारभ्यन्ते। [1]परिधेर्बहिर्निर्गतः स्कन्नः, पूर्वतस्तु परिध्यग्रहात् [2]पुरोगतः[क]। स्रुवस्य बुध्नेन मूलेन। **अभिनिदध्यात्** पीडयति[3] "मा तम" इति सर्वासु दिक्षु[ख]। [4]अध्वर्य्वादि प्रतिदिशं विशेषः॥ ९॥

**आह यज्ञं दधे निर्ऋतेरुपस्थात्तं देवेभ्यः परिददामीत्येनमादाय॥ १०॥**

आदानादि समानम्॥ १०॥

इति द्वितीया कण्डिका

**"[1]सहस्रशृङ्गो वृषभो जातवेदाः स्तोमपृष्ठो घृतवान्सुप्रतीकः। मा नो हासीन्मेत्थितो नेत्त्वा जहाम गोपोषं नो वीरपोषश्च यच्छ" इत्येनमग्नौ प्रहरति॥ १॥**

**प्रहरति** क्षिपति॥ १॥

**प्रहृत्य वाभिजुहुयात्॥ २॥**

[5]क्षिप्त्वोपरि वाज्ञारस्य जुहोति। [6]एकस्मिन्नपि शिष्टे प्रयाजे प्रायश्चित्तमुपदेशः[ग]॥२॥

**[2]यदि कालसन्निकर्षेऽग्निर्मथ्यमानो न जायेत यत्रान्यं पश्येत्तत आहृत्य जुहुयात्॥ ३॥**

---

1. B. 3. reads बहिर्गतः.
2. B. 2. reads परितो गतः, B. 3. पुरतो गतः.
3. B. 1. omits पीडयति.
4. Ibid reads अध्वर्य्वादीनि.
5. B. 2. reads क्षिप्त्वा वोपर्यङ्गारस्य.
6. B. 3. reads एकस्मिन्नवशिष्टे.

क. पूर्वस्यां दिशि परिधेरभावात्तत्र बहिः परिधिदेशगमनं नाम दक्षिणोत्तरपरिध्यग्रदेशाद्बहिर्गमनम्। अतो बहिः परिधीत्यस्य देशोपलक्षणार्थत्वात्परिधानात्पूर्वमप्येतत्प्रायश्चित्तमिति।

ख. मन्त्रस्यानुषङ्ग इति।

ग. प्रयाजेभ्य इति बहुवचनस्याविवक्षितत्वादेकस्मिन्नवशिष्टेऽपि प्रयाजे प्रायश्चित्तमित्युपदेशमतम्। स्वमते तु बहुवचनस्याविवक्षायामपि 'पुरा प्रयाजेभ्यः' इति प्रयाजमात्रपूर्वभावित्वावगमादेकस्मिन्नपि प्रयाजे कृते पूर्वभावित्वं न स्यादिति।

१ तै. ब्रा. १.७.२.७. २ तै. ब्रा. १.७.३.१.

समारूढोऽनुगतो वा यदि मथ्यमानो विहरणकालसमीपे न जायेत, यत्रान्यं लौकिकमग्निं पश्येत् तत आहृत्य विहृत्य[1] होमः **भारद्वाजमतात्**। [क]यदा [2]स्वपक्षाण-मन्थनं, भस्मनाऽरणी संस्पृश्य मन्थनं वा कृत्वाग्निप्रतिनिधिः । यदा न कृत्वा [ख]विहरण-काले तदा 'यस्योभावनुतौ' इति [3]पुनराधेयमेव । [ यदा[4] तु समारूढस्तदा कृत्वाऽग्नि-प्रतिनिधिम्, अनुद्धृतेऽस्तमिते प्रायश्चित्तमेव । ततो होमं कृत्वा मन्थनम्, अनुगतेष्टिः । यावदन्यो विहरणकालो न जायते[ग] । अजाते तु नष्टम्, तदा पुनराधेयमेव । ]

केचित्त्वाहुः—मन्थने प्रवृत्ते[5] यस्य वोभावनुगताविति । नैतत्; [6]यद्यप्युदयेऽस्त-मिते[घ] वाग्निं प्रतिनिधिं कृत्वानुद्धृतप्रायचित्तम्, ततोऽग्निहोत्रहोमः, ततो मन्थनम् । द्वितीयमपि होमं प्रतिनिधौ जुहोति, [7]तृतीयं प्राप्य विनष्टो भवतीति । [8]पुनर्मन्थेदित्यवचना-देक एव होमः प्रतिनिधौ युक्तः । अग्निहोत्रहोमार्थ [9]एव प्रतिनिधिः "[1]अग्नावेवास्याग्नि-होत्रं हुतं भवति" इति लिङ्गात् । मथितेऽनुगतप्रायश्चित्तं सर्वत्र । लौकिकाग्निप्रतिनिधिः पाकाहुतिलक्षणं[10] करोतीति सर्वाग्नीनां विभवाच्च ॥ ३ ॥

**अथात्वरमाणः पुनर्मन्थेत्** ॥ ४ ॥

**[2]यद्यन्यं न विन्देदजायै दक्षिणे कर्णे होतव्यः** ॥ ५ ॥

अजादयस्तु ध्रियमाणा अपि पाकं न साधयन्तीत्याहवनीयप्रतिनिधय[11] एव, तस्य प्रधानाहुत्यर्थत्वात् । 'अग्निपतय' इत्याहवनीयायतने प्रतिष्ठापनमनर्थलोपात् । अविकारश्च

1. B. 3. omits विहृत्य.
2. B. 1. reads स्वपक्षाणमन्थनं वा.
3. B. 3. reads पुनराधानं.
4. कुण्डलान्तर्गतो भागः B. 2. पुस्तके नास्ति.
5. B. 3. reads प्रवृत्तस्य.
6. B. 2. reads यद्यप्युदये वास्तमिते वा कृत्वा प्रतिनिधिं; B. 1. reads यद्यप्युदेयस्तमेति.
7. B. 2. reads तृतीयमप्यग्निं नष्टः.
8. B. reads पुनः पुनः.
9. B. 2. omits एव.
10. B. 1. reads क्षपणं.
11. B. 2. omits प्रतिनिधयः.

क. पूर्वं समारूढानुगतयोस्साधारण्येनोक्तिः, इदानीमनुगमने भेदेनोच्यते—अनुगमने मथ्यमाने प्रागुदया-स्तमयाद्वाऽग्निप्रतिनिधिं गार्हपत्येऽवस्थाप्य विहृत्य होमः ।

ख. प्रतिनिधिं मन्थनादि करोतीति शेषः ।

ग. तावन्मन्थनमिति शेषः ।

घ. 'मथ्यमानो न जायेत' इति मन्थने प्रवृत्तमात्रस्य प्रतिनिधौ होमविधानात् प्रतिनिधिस्थापनस्य च कालविशेषानुपदेशान्मन्थने प्रवृत्तस्यास्तमितेऽपि प्रतिनिधिरित्यर्थः ।

१ तै. ब्रा. १.७.१.१.    २ तै. ब्रा. १.७.१.१.

मन्त्राणाम्, प्रतिनिधित्वात्। गार्हपत्याद्ग्रहणमुद्धरणमिति नोद्धरणमन्त्रः। न च तद्याजमानम्। तूष्णीमजादीनामायतने प्रतिष्ठापनमुपदेशः[क], नेध्मो, [1]न समित्, इन्धनार्थत्वात्। शुन्धनपरिस्तरणे तु क्रियेते। ततो दोहनादि। परिषेकः [2]प्रतिनिधेर्दक्षिणाग्नेश्च यदि ध्रियते। (न) धारा च। अन्यभावात्पाकादीनां निवृत्तिः। प्रतिष्ठापनं भूमौ स्रुगादानादि। [3]अजादौ न तपनमर्थलोपात्। संमर्शनन्तु[4] भवति। अभावेऽप्यर्चिषः उद्द्रवणार्थत्वान्न मन्त्रलोपः। [5]उपसद्याप उपस्पृश्य प्राणनादि। कर्ण एवाहुतिद्वयम्, [6]यत्र चासम्भवः। वचनाच्चासंसर्गदोषः[7]। उत्तरमविकृतं तपनेन्धनवर्जं योऽग्निर्ध्रियते सर्वम्। केचित्त्वाहुः— सङ्कल्पितस्य होमकालस्य सन्निकर्षे समीपे यदि मथ्यमानो न जायेत [ख]ततोऽग्निप्रतिनिधिं कृत्वाऽस्तमिते प्रायश्चित्तमिति ॥ ५ ॥

**अजस्य तु ततो नाश्नीयात् ॥ ६ ॥**

[8]अजादेर्मांसभक्षणप्रतिषेधः, स्वार्थस्य [9]भक्षस्य न परार्थस्येडादेः [10]भक्षणस्य क्रत्वङ्गभूतस्य। अजाक्षीरादीनां प्रतिषेध इति केचित्[ग]। शक्या जातिः प्रतिषेधेनानुग्रहीतुमिति प्रतिषेधे [घ]लिङ्गसंख्ययोरविवक्षा। आलम्भनादिषु त्वशक्या जातिरालब्धुमिति लिङ्गसंख्यस्य विवक्षा ॥ ६ ॥

**[1]यद्यजां न विन्देद्ब्राह्मणस्य दक्षिणे हस्ते होतव्यम् ॥ ७ ॥**

---

1. B. 1. reads न समिन्धनार्थत्वात्. 2. B. 2. reads प्रतिनिधिः.
3. B. 2. and 3. omits अजादौ and read नात्र तपनं.
4. B. 1. omits तु. 5. B. 2. reads उपसाद्य.
6. B. 2. omits यत्र चासंभवः. 7. B. 2. reads न संसर्गदोषः.
8. Ibid अजमांसभक्षणप्रतिषेधात्. 9. Ibid भक्षणस्य.
10. B. 2. omits भक्षणस्य.

क. अग्निलिङ्गत्वान्मन्त्राणां समवेताभिधानासम्भवादित्युपदेशमतम्।

ख. प्रधानकालोत्कर्षभयादस्तमितेऽपि प्रायश्चित्तं कृत्वा प्रतिनिधावग्निहोत्रं कर्तव्यमिति।

ग. 'अजस्य तु नाश्नीयात्' (तै. ब्रा. ३.७.३.२.) इत्यत्र षष्ठ्याऽजसम्बन्धि द्रव्यमुच्यते। तस्य चाजाद्व्यतिरिक्तत्वं गम्यते। तस्य भक्षणे प्राप्ते प्रतिषेधः क्रियते। अजमांसस्य तद्व्यतिरिक्तत्वाभावाश्च प्रतिषेधः। क्षीरादेस्तु तद्व्यतिरिक्तत्वमस्ति। अतस्तत्र भक्षणीयमिति केचित्।

घ. 'अजस्य' इत्यत्र पुंस्त्वमेकत्वञ्च भासेते। तयोर्विवक्षायां स्त्रीत्वविशिष्टस्य द्वित्वेन बहुत्वेन वा विशिष्टस्याजस्य भक्षणं कर्तव्यमित्यर्थस्स्यात्। अतः प्रतिषेधे लिङ्गसंख्ययोरविवक्षा। "अग्नीषोमीयं पशुमालभेत" इत्यालम्भनविधौ तु तयोर्विवक्षा। जातौ प्रवृत्तस्सन्नालम्भनविधिरशक्यत्वाद्व्यक्तौ पर्यवस्यति। व्यक्तौ तु लिङ्गसंख्ययोर्निवेशो भवितुमर्हति। अतोऽत्र विवक्षेति।

1 तै. ब्रा. ३.७.३.१.

अजा पश्चान्मुखी [1]ब्राह्मणश्च । तयोः [2]परिस्तरणादि नाऽवयवस्य ॥ ७ ॥

**ब्राह्मणन्तु वसत्यै नापरुन्धीत ॥ ८ ॥**

असूर्योढस्यापि वसतिं भोजनञ्च दद्यात् ॥ ८ ॥

**यदि ब्राह्मणं न विन्देद् दर्भस्तम्बे होतव्यम् । दर्भांस्तु नाध्यासीत ॥ १० ॥**

ब्राह्मणस्योपर्यासनम् **अध्यासनं** दर्भाणाम् । तस्य च स्वार्थस्य[3] च प्रतिषेधः ॥१०॥

**यदि दर्भान्न विन्देदप्सु होतव्यम् ॥ ११ ॥**

**आपस्तु न परिचक्षीत-इमा भोजनीया इमा अभोजनीया इति ॥ १२ ॥**

**परिचक्षणं** वर्जनम् । तेन तन्न कर्तव्यम् ॥ १२ ॥

**अप्यभोजनीयेनं संवत्सरं परिगृह्णीयादेवापः ॥ १३ ॥**

अभोज्यानामप्यपाम्[4] । [5]एतस्मिन् संवत्सरे न यावज्जीवम् । [क]अभोज्यान्नप्रतिग्रहणञ्च[6] कार्यम् ॥ १३ ॥

**अद्भिस्तु न पादौ प्रक्षालयति ॥ १४ ॥**

अद्भिस्तु पादप्रक्षालनप्रतिषेधः, श्रुतिबलीयस्त्वादधौतपादो[7]ऽप्यधिकुरुते [8]कण्डिकादिभिर्वा प्रक्षाल्य[9] । केचित्त्वाहु[10]:—[11]अप्स्वनुद्धृतासु पादप्रक्षालनं करोति, अशुचेरनधिकारात् । 'अद्भिरुद्धृताभिर्न पादप्रक्षालनं करोति' इति ॥ १४ ॥

**सांवत्सरिकाण्येतानि व्रतान्यथापरम् । यावज्जीवमित्यालेखनः ॥ १५ ॥**

---

1. B. 2. reads ब्राह्मणस्य.
2. B. 1. wrongly reads परिस्तरणादि तात्पर्यवस्त्यत्र.
3. B. 2. reads स्वार्थस्य प्रतिषेधाः.
4. B. 1. omits अपाम्
5. B. 1. reads एतस्मिन् वत्सरे यावज्जीवं वा.
6. B. 1. reads प्रतिषेधश्च.
7. B. 3. reads अपूतपादः.
8. B. 2. कुण्डिकाद्भिर्वा
9. B. 2. reads अधिकुरुते after प्रक्षाल्य.
10. B. 2. omits आहु:
11. B. 1. omits अप्सु.

क. 'आपस्तु न परिचक्षीत' (तै. ब्रा. ३.७.३.४.) इत्यनेनैवापां प्रतिग्रहे सिद्धेऽपि 'अप्यभोजनीयस्य' इति सूत्रे पुनः प्रतिग्रहविधानात् एकदेशनिर्देशाच्च निन्दितान्नस्यापि भोजनं प्रतिगृह्णीयादेव, अपश्च प्रतिगृह्णीयादभोज्या अपीति गम्यते ।

[1]**सांवत्सरिकाण्येतानि** " [1]संवत्सरं हि व्रतं नाती "ति लिङ्गात्[2] । यावज्जीवं [3]वाऽविशेषश्रुतेः । एवञ्च सति ' संवत्सरं हि व्रतं नाती 'ति प्रायवादः ॥ १५ ॥

**संवत्सरस्य परस्तादग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेत् ॥ १६ ॥**

**संवत्सरस्य परस्तात्** पूर्णे संवत्सरे । [4]व्रतपतिः यत्र व्रतपतिरस्ति । **व्रतपतये** व्रतपतिरग्निः । " [2]त्वमग्ने व्रतपा असि " " [3]यद्वो वयं प्रमिनामे "ति ॥ १६ ॥

**अग्नये क्षामवतेऽष्टाकपालं येषां पूर्वापरा अन्वञ्चः प्रमीयेरन् । गृहदाहे वा ॥ १७ ॥**

**पूर्वाः** पूर्ववयसो वृद्धा ज्ञातयः । **अपराः** अपरे पुत्रपौत्रनप्त्रादयो[5] ज्ञातयः । **अन्वञ्चः** सन्ततम् प्रमीयन्ते वृद्धाश्च बालाश्च । नैमित्तिकी क्षामवती । "[4]नैषां पुराऽऽयुषोऽपरः प्रमीयते " " [5]नास्यापरं गृहान् दहति " इत्यर्थवादो न कामः । निमित्तत्वेन चोदितत्वात् । अग्नये क्षामवते, अग्ने क्षामवन्, अग्निं क्षामवन्तम्, अग्नेः क्षामवतः, अग्निः क्षामवान् । " [6]अक्रन्दग्निः " " [7]त्वे वसूनि " इति ॥ १७ ॥

**अग्नये विविचयेऽष्टाकपालं यस्याहिताग्नेरन्यैरग्निभिरग्नयः संसृज्येरन्मिथो वा । ॥ १८ ॥**

**अन्यैरग्निभिः** औपासनादिभिर्यदि[6] मिश्रणम् । **मिथो वा**[7] गार्हपत्यादयः ।

---

1. B. 2. reads एवं before सांवत्सरिकाणि.
2. B. 2. लिङ्गात्.
3. B. 2. reads मित्यविशेषः
4. B. 1. omits व्रतपतिः यत्र व्रतपतिरस्ति
5. B. 2. omits नप्तृ.
6. B. 1. omits यदि.
7. B. 2. omits वा.

१ तै. सं. २.५.४.३.

२ त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा । त्वं यज्ञेष्वीड्यः ॥ (तै. सं. १.१.१४.४.)

३ यद्वो वयं प्रमिनाम व्रतानि विदुषां देवा अविदुष्टरासः ।
अग्निष्टद्विश्वमापृणाति विद्वान्येभिर्देवाꣳ ऋतुभिः कल्पयाति ॥ (तै. सं. १.१.१४.४.)

४ तै. सं. २.२.२.५.

५ तै. सं. २.२.२.५.

६ अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।
सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥ (तै. सं. १.३.१४.२.)

७ त्वे वसूनि पुर्वणीक होतर्दोषा वस्तोरेरिरे यज्ञियासः ।
क्षामेव विश्वा भुवनानि यस्मिन्त्सꣳ सौभगानि दधिरे पावके ॥ (तै. सं. १.३.१४.३.)

[1]यदा सर्वे सह [2]भवन्ति मिश्राः परस्परेण। अग्नये विविचये, अग्ने विविचे[3], अग्निं विविचिम्, अग्नेर्विविचेः, अग्निर्विविचिरिदम्। "[1]वि ते विष्वक्" "[2]त्वामग्ने मानुषीरीडत इति ॥ १८ ॥

**अग्नये विपृचेऽष्टाकपालं यदि गार्हपत्याहवनीयौ ॥ १९ ॥**

**अग्निना [illegible] वयं गीर्भिः स्तोमं मनामहे। स नो रास्व सहस्रिणः ॥ कविरग्निः [illegible]मिध्यते विप्रो यज्ञस्य साधनः। विपृञ्चन् रास्व नो वसु इति याज्या[illegible]वाक्ये ॥ २० ॥**

गार्हपत्याहवनीययोस्संसर्गे अग्नये विपृचे। अग्ने विपृक्, अग्निं विपृचम्, अग्नेर्विपृचः, अग्निर्विपृगिदम् ॥ १९, २० ॥

**अग्नये वीतयेऽष्टाकपालं यदि गा[illegible]पत्यदक्षिणाग्नी [illegible]ग्न्या[illegible]वनीयौ वा ॥ २१ ॥**

अग्नये वीतये, अग्ने वीते, अग्निं वीतिम्, अग्नेर्वीतेः, अग्निर्वीतिरिदम्। "[3]अग्न आयाहि वीतये" "[4]यो अग्निं देववीतये" इति। [क]सर्वत्र चतुर्थी परिपठिता ॥ २१ ॥

**अग्नये शुचयेऽष्टाकपालं यदि प्रादाव्येनाभ्यादाहेन [illegible]ग्निना वा। अग्नये सङ्कुसुकायाष्टाकपालं यदि सूतकाग्निना। "सङ्कु[illegible]का वि[illegible]सुका विकिरो यश्च वि[illegible]ः। माषाज्येन नलेध्मेन [illegible] शमयामसि" ॥ "अस्मिन् वयं सङ्[illegible]सुकऽग्नौ रिप्राणि मृज्महे। अभूम यज्ञियाः शुद्धाः प्र ण आयूंषि तारिषत्" ॥ इति याज्या[illegible]वाक्ये। अग्नयेऽप्सुमतेऽष्टा[illegible]पालं यदि वैद्युतेन ॥ २२ ॥**

---

1. B. 1. reads तदा.　　　　2. B. 2. विभवन्ति.
3. B. 1. विविचिन्.

क. सर्वत्र देवतानिर्देशश्चतुर्थ्यन्तः परिपठितस्सूत्रकारेण। तदनुसारेणान्यासां विभक्तीनामूहः कार्य इति।

१ विते विष्वग्वात[illegible]तासो अग्ने भामासः। शुचे शुचयश्चरन्ति ॥　　(तै. सं. ३.३.११.१.)

२ त्वामग्ने मानुषीरीडते विशो होत्राविदं विविचिं रत्नधातमम्। गुहा सन्तं सुभग विश्वदर्शतं तुविष्मणसं सुयजं घृतश्रियम् ॥　　(तै. सं. ३.३.११.२.)

३ अग्न आयाहि वीतये गृणानो हव्यदातये। नि होता सत्सि बर्हिषि ॥

४ यो अग्निं देववीतये हविष्माँ आविवासति। तस्मै पावक मृडय ॥

आग्नये शुचये, अग्ने शुचे, अग्निं शुचिम्, अग्नेः शुचेः, अग्निश्शुचिरिदम्। **प्रावाध्यो** वनदाहः। **अभ्यादाह्यो** यो गृहान्दहति। **शावाग्निः** येन मनुष्या दह्यन्ते। "[1]अग्निश्शुचिव्रततमः" "[2]उदग्ने शुचयस्तव" इति। [क]सङ्कुसुकस्य वृश्चद्भि- भक्तिः। **सूतकाग्निः** यस्मिञ्जातकर्म करोति, सूतिकां वा येन तापयन्त्यग्निना। **वैद्युतेन** संसर्गे। अप्सुमानुक्तः। अप्सुमतः "[3]अप्स्वग्ने" "गर्भो[4] अस्यौषधीनाम्" इति॥ २२॥

**यदि सर्वास्सन्निपतेरन् विविचये निरुप्य शुचये निर्वपेद्व्रात- भृतीं तृतीयामप्सुमतीं चतुर्थीं क्षामवतीमन्तं परिक्रमयेत्॥ २३॥**

उक्तानां संसर्गेष्टीनां यदि सर्वासां निमित्तान्युत्पद्यन्ते तदा [1]सर्वसन्निपाते [ख]क्रम इष्टीनाम्। [2]यद्यन्येन क्रमेण निमित्तान्युत्पद्यन्ते [3]व्रातपती चाधिका तृतीया [ग]वचनाच्च। कृत्वा चतुर्थीमप्सुमतीमन्यास्संसर्गेष्टयः। क्षामवती गृहदाहेष्टिरन्ते॥ २३॥

**व्रातभृतीं द्वितीयामेके समामनन्ति। व्रातपतीमुत्तमाम्॥ २४॥**

अथवा विविचये निरुप्य व्रातभृते, ततः शुचयेऽप्सुमते, ततोऽन्याः क्षामवत्यन्ताः। ततोऽग्नये व्रतपतये। [4]एकेषामुक्तवचनात् सर्वसन्निपाते क्रम इष्टीनाम्। केचित्त्वाहुः— इहासिद्धाया दर्शनात्प्रायश्चित्तेष्टिषु [5]सर्वासु व्रातपती समुच्चीयत इति॥ २४॥

इति तृतीया कण्डिका

**गर्भं स्रवन्तमगदमकरग्निरिन्द्रस्त्वष्टा बृहस्पतिः। पृथिव्या- मवचुश्चोतैतन्नाभिप्राप्नोति निर्ऋतिं पराचैः इत्यग्निहोत्रस्थालीं**

---

1. B. 2. omits सर्व.
2. B. 2. & 3. यद्यपि.
3. B. 1. व्रतभृती.
4. B. 1. omits एकेषां reads उक्तवचनात्.
5. B. 3. reads सर्वत्र.

क. शीतापनोदनार्थो लौकिकोऽग्निः सङ्कुसुकः।

ख. सूत्रोक्तः क्रम इष्टीनाम्।

ग. निमित्ताभावेऽपि वचनात्कर्तव्येत्यर्थः।

१ अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः। शुची रोचत आहुतः॥

२ उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते। तव ज्योतींष्यर्चयः॥ (तै. सं. १.३.१४.८.)

३ अप्स्वग्ने सधिष्टव सौषधीरनु रुध्यसे। गर्भे सञ्जायसे पुनः॥

४ गर्भो अस्यौषधीनां गर्भो वनस्पतीनाम्। गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि॥ (तै. सं. ४.२.३.२.)

**[क]स्रवन्तीमभिमन्त्र्य विधुं दद्राणमिति सन्दध्यात् ॥ १ ॥**

**स्रवन्तीमभिमन्त्र्य** सन्धाय च स्थालीं स्कन्नप्रायश्चित्तमग्निहोत्रस्य ॥ १ ॥

**अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजीत्युक्तम् ॥ २ ॥**

प्रवृत्तदर्शपूर्णमासयाजिनः पाथिकृती। [1]यस्य तु प्राप्तेऽपि काले नारभ्येते दर्शपूर्णमासौ तस्य यज्ञविभ्रष्टेष्टिः। [ख]दर्शपूर्णमासयाजी भूत्वाऽमावास्यां पौर्णमासीं वाऽतिपादयेत्। [ग]काले उभयोरप्यतिपत्तौ पाथिकृति प्रायश्चित्तं श्रुतिलक्षणत्वात्। [घ]दर्शयाजिनो न कुर्यात् हि पन्था यद्दर्शपूर्णमासौ। तस्मादेष पथः। अपथेनैति योऽतिपातयेत् स पथिकृत् अपथात्पन्थामपि नयति। अनड्वान् [2]यो वहति शकटम् स दक्षिणा। अग्नये पथिकृते, अग्ने पथिकृत्, अग्निं पथिकृतम्, अग्नेः पथिकृतः, अग्निः पथिकृदिदम्। "[1]अग्ने नय"

---

1. B. 2. reads यन्तु प्राप्ते काले.
2. B. 1. reads शकटं योजयति.

क. "रेतो वा एतद्वाजिनमाहिताग्नेर्यदग्निहोत्रम् तद्यत्स्रवेत्" (तै. ब्रा. ३.७.३.६.) इति होमद्रव्यं प्रकृत्य "गर्भं स्रवन्तमगदमकरित्याह" इति विनियोगादग्निहोत्रद्रव्यस्यैव स्रवतोऽभिमन्त्रणमिति प्रतीयते, तथापि 'अग्निहोत्रस्थालीं स्रवन्तीम्' इति सूत्रे निर्देशात् विनियोजकब्राह्मणे द्रव्यपरनिर्देशो द्रव्यविशिष्टस्थाल्यभिमन्त्रणपर इति सूत्राशयः।

ख. "यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपादयेत्" (तै. सं. २.२.२.१.) इति ब्राह्मणव्याख्यानरूपमिदं भाष्यम्।

ग. 'अमावास्यां पौर्णमासीं वाऽतिपादयेत्' इत्येकैकातिपत्तिश्रवणेऽपि एकस्मिन्नतिपन्ने अकृते नैमित्तिके द्वितीयस्याप्यतिपत्तौ उभयत्र दोषपरिहारार्थमप्येकैव पाथिकृती, तत्राप्येकातिपत्तेर्विद्यमानत्वात्। यथा ज्योतिष्टोमे प्रसर्पतामृत्विजां युगपदवच्छेदावसरे प्रत्येकमवच्छेदनैमित्तिकप्राप्तावप्येकमेव नैमित्तिकं तन्त्रेण क्रियते तद्वत्। उद्देश्यविशेषणानामिव निमित्तविशेषणानामप्यविवक्षितत्वादिति।

घ. "पथो वा एषोऽध्यपथेनैति यो दर्शपूर्णमासयाजी सन्नमावास्यां पौर्णमासीं वाऽतिपादयत्यग्निमेव पथिकृतं स्वेन भागधेयेनोपधावति स एवैनमपथात्पन्थामपि नयत्यनड्वान्दक्षिणावही ह्येष समृद्ध्यै" (तै. सं. २.२.२.१.) इति वाक्यशेषस्य व्याख्यानपरमिदं भाष्यम्। "एष वै देवयानः पन्था यद्दर्शपूर्णमासौ" (तै. सं. २.५.६.२.) इत्युक्तत्वात्।

१ अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान्।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम॥ (तै. सं. १.१.१४.३)

"[1]आ देवानाम्" इति पथिकृतः । "[2]यद्वाहिष्ठं तत्" "[3]अग्ने त्वं पारय" इति स्विष्टकृतः । [क]नैमित्तिकत्वाद्वैश्वानर्यपि पश्चात् । ततो [1]दर्शः पूर्णमासो वा, यावदन्यो न पर्वकालः । सर्वाऽपरपक्षः पूर्णमासस्य, सर्वः [2]पूर्वपक्षो दर्शस्येति [ख]निदानकारमतिः[3] ॥ २ ॥

**समानतन्त्रे वा मुख्यः कार्यः ॥ ३ ॥**

द्वयोर्बहूनां [4]वाऽप्यतिपत्तौ पथिकृद्वैश्वानरावेव [5]समानतन्त्रौ । [ग]नानातन्त्रौ वा बौधायनमतेन । प्रवृत्तस्य कालात्यये पथिकृत्, अप्रवृत्तस्य वैश्वानरीति हिरण्यकेशिनः । [घ]उपदेशः–पाथिकृतोऽपि[6] स्वर्गपथप्रतिपत्त्यर्थः वैश्वानरोऽपि, एकार्थत्वाद्वैश्वानरो विकल्प इति । [7]शाखान्तरोक्तेषु न वैश्वानरसमुच्चयः । अतिपन्नेन सह पर्वणा एकस्मिन् तन्त्रे प्रथमः

---

1. B. 1. दर्शपूर्णमासौ.
2. B. 2. सर्वः पूर्वः.
3. B. 2. निदानगतिः.
4. B. 2. omits वा.
5. B. 2. reads समानतन्त्रेण नानातन्त्रेण वा.
6. B. 1. omits अपि.
7. B. 1. शाखान्तरेषु मुख्यकरणादिषु.

क. "अप वा एष सुवर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वातिपादयति सुवर्गाय हि लोकाय दर्शपूर्णमासाविज्येते वैश्वानरं द्वादशकपालं निर्वपेदमावास्यां पौर्णमासीं वाऽतिपद्य" (तै. सं. २.२.५ ३.) इति दर्शपूर्णमासातिपत्तिं निमित्तीकृत्य वैश्वानर्यपि विहिता । पाथिकृत्या वैश्वानर्याश्च निमित्तमेकमेव, तथाप्येकशाखापठितत्वादनयोस्समुच्चयः न तु विकल्प इत्यपि शब्देनोच्यते । तत्रापि पथिकृतः प्रथमपठितत्वात्तत्पश्चाद्वैश्वानरीति पश्चाच्छब्देनोच्यते ।

ख. 'पौर्णमासेन हविषाऽपरपक्षमभियजते अमावास्येन पूर्वपक्षम्' इति निदानसूत्रम् ।
(नि. सू. प्र. २. खं. ५.)

ग. 'स ह स्माह बौधायनः पाथिकृतं निरुप्य वैश्वानरं द्वादशकपालमनुनिर्वपेदथातिपन्नां प्रतियजेत्' (बौ. श्रौ. सू. २३.१.) इति बौधायनः स्वमतमुक्त्वा 'अग्नो ह स्माह शालीकिः पाथिकृतं निरुप्य वैश्वानरं द्वादशकपालं समानतन्त्रमनुनिर्वपेत्त चातिपन्नां प्रतियजेत्' इति शालीकिमतेन समानतन्त्रत्वमनयोराह । अतो बौधायनमतेन नानातन्त्रत्वमनयोरिति ।

घ. वैश्वानरस्यापि "अथो देवता एवान्वारभ्य सुवर्गं लोकमेति" इति वाक्यशेषद्वारा देवयानमार्गप्रापकत्वश्रवणात्तस्यापि पाथिकृतस्येव स्वर्गपथप्रतिपत्त्यर्थत्वं ज्ञायते । तथा सत्येकार्थत्वादनयोर्विकल्प इत्युपदेशमतम् ।

१ आ देवानामपि पन्थामगन्म यच्छक्नवाम तदनु प्रवोढुम् ।
अग्निर्विद्वान् स यजात्सेदु होता सो अध्वरान् स ऋतून् कल्पयाति ॥ (तै. सं. १.१.१४.३)

२ यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो । महिषीव त्वद्रयिस्त्वद्वाजा उदीरते ॥

३ अग्ने त्वं पारया नव्यो अस्मान्त्स्वस्तिभिरति दुर्गाणि विश्वा ।
पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शंयोः ॥ (तै. सं. १.१.१४.४.)

पथिकृत् कार्यः । प्राकृत एव स्विष्टकृत् न “ यद्वाहिष्ठम् ” इति, अस्य पथिकृतश्शाखान्तरे विहितत्वात् ॥ ३ ॥

**अथैकेषाम्-वि वा एतस्य यज्ञश्छिद्यते यस्य यज्ञे प्रततेऽन्तरेता-मिष्टिं निर्वपन्ति । य एवासावाग्नेयोऽष्टाकपालः पौर्णमास्यां योऽमा-वास्यायां तमग्नये पथिकृते कुर्यात् । तेनैव पुनः पन्थामवैति न यज्ञं विच्छिनत्तीति विज्ञायते ॥ ४ ॥**

**सांयाज्ये वा पाथिकृती स्यातामित्यपरम् ॥ ५ ॥**

अन्ये त्वाहुः—विच्छिद्यते वा **एतस्य यज्ञो यस्य यज्ञे प्रतते** आरब्धे अपरिसमाप्ते **अन्तरेतामिष्टिं पाथिकृतीं** मुख्यां कुर्वन्ति । अत आग्नेय एव पथिकृद्देवत्यः कार्यं [1]आरब्धे कर्मणि । पुनश्च पन्थानं प्रतिपद्यते, [2]न यज्ञविच्छेदः । स्विष्टकृतो वा “ अग्ने नय ” “ आ देवानाम् ” इति याज्यानुवाक्ये । [3]अप्रारब्धकर्मणस्तु मुख्यः [4]पाथिकृतः [क]प्रथमविधिर्वा । उपदेशः—यावज्जीवं प्रवृत्तौ दर्शपूर्णमासौ । तयोर्मध्ये न कार्यः पथिकृन्मुख्यो न कर्तव्य इति निन्दा उत्तरविधिप्रशंसार्था । त्रयोऽप्येते विकल्प्यन्त इति ॥ ४, ५ ॥

**[ख]यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेतीत्युक्तम् ॥ ६ ॥**

---

1. B. 2. reads प्रारब्धे.
2. B. 2. omits न.
3. B. 1. आरब्ध.
4. B. 2. मुख्यो वा पथिकृत्.

क. प्रयोगानारम्भे उभौ कल्पौ भवतः ।

ख. ‘ यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान् विभजेद्ये मध्यमास्स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधँश्चरुं येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुम् ” (तै. सं. २.५.५.२.) इति । अस्यार्थस्सायणाचार्यैरेवमुक्तः—‘ चतुर्दश्याममावास्या-भ्रान्त्या सन्दिहानो रात्रावेव हवींषि निर्वपेत् । तथा च श्रुत्यन्तरमाम्नायते—“ यदि बिभीयाद‌भि मोदेष्यतीति महाग्नेः हवींषि निर्वपेत् फलीकृतैस्तण्डुलैरुपासीत, अर्द्धं हविरातञ्चनार्थं निदध्यात् ’ अर्द्धं न; यद्युदियात् तेनाऽऽतञ्च्य प्रचरेत् । यदि नाभ्युदियात् तेन ब्राह्मणान् भोजयेत् ” इति । अस्यार्थः— यदि चतुर्दश्यां प्रातरग्निहोत्रादूर्ध्वममावास्याभ्रान्त्या वत्सानपाकृत्य सायं दुग्ध्वा दध्यर्थ-मातञ्चनं विधाय पश्चात्तिथौ सन्दिहानः मां प्रति चन्द्रोऽभ्युदेष्यतीति भीतो भवेत् तदा रात्रिमध्ये हवींषि निरुप्य, फलीकरणान्तं विधाय तादृशैस्तण्डुलैर्युक्तश्चन्द्रोदयं प्रतीक्षेत । तत्पूर्वातञ्चनेन निष्पन्नस्य दध्नोऽर्धमुत्तरस्यां रात्रौ पुनरातञ्चनार्थमवस्थापयेत् । इतरस्त्वर्द्धं न पृथगवस्थापयेत् किन्तु तण्डुलैस्सह पुरतोऽवस्थाप्य चन्द्रोदयं प्रतीक्षेत । यदि चन्द्रोऽभ्युदियात् तदानीं पृथगव-

निर्वापे कृते **यस्य पुरस्तात्** पूर्वस्यां दिशि चन्द्रमा दृश्यते, अमावास्येति प्रमादात्। त्रेधा त्रिभिर्भागैः। [1]आग्नेयांस्तण्डुलान् आग्नेयैन्द्राग्नयोर्वा विभजेत्। मध्यमानग्नये दात्रे। स्थविष्ठान् स्थूलतमान् इन्द्राय प्रदात्रे दधनि सायन्दोहे श्रपयितव्याः। अणिष्ठाः सर्वेभ्यो ह्रसिष्ठाः ते विष्णवे शिपिविष्टाय प्रातर्दोहे भाविनि पयसि श्रपयितव्याः। श्रपणार्थे प्रणीताधर्माः। ऊहेन यजुरुत्पूतेन वाऽऽग्नेयापूर्वगुणविकारः। स्थानाद्देवता-सामान्याच्च। [2]अग्निर्दाता, इन्द्रः प्रदाता, विष्णुः शिपिविष्टश्च स्थानात्। सान्नाय्यश्रपणा-त्सान्नाय्यापूर्वयोर्गुणविकारौ। वायव्य यवाग्वोर्विधिस्वतश्चर्वोरिति। असोमयाजिन उदके चरू, ऐन्द्राग्नापूर्वगुणविकारौ यतश्च प्राकृतानां स्थाने। अतोऽभ्युदयेष्टयामपि[3] विकृती यजमानो न द्वे यजेतेति।

[क]अन्ये त्वाहुः—आग्नेयद्रव्यविभागादाग्नेयस्यैवाभ्यासस्सो याजिनः। असोम-याजिनोऽग्निर्दाता। आग्नेयस्यैन्द्राग्नस्य चरू इति। उपदेशः—अग्निर्दाता। विष्णुश्शि-पिविष्टश्चाग्नेयस्य, इन्द्रः प्रदाता ऐन्द्राग्नस्य ॥ ६ ॥

**अनिरुप्तेऽभ्युदिते प्राकृतीभ्यो निर्वपेदित्याश्मरथ्यः ॥ ७ ॥**

अनिरुप्ते दृष्टे चन्द्रमसि प्राकृतीनामेव निर्वापः ॥ ७ ॥

**तण्डुलभूतेष्वपनयेत् ॥ ८ ॥**

प्रक्षाल्य विभागः। त्रेधा तण्डुलानिति [4]प्राकृतानामपनयः ॥ ८ ॥

**व्यृद्धभाग्भ्य इत्यालेखनः ॥ ९ ॥**

1. B. 2. आग्नेयतण्डुलान्.
2. B. 1. omits अग्निर्दाता.
3. B. 2. अभ्युदयेष्ट्या विकृतिः.
4. B. 2. प्रकृतानां.

स्थापितेनार्धेन परेद्युर्मुख्यामावास्यायां रात्रौ सायन्दोहमातञ्च्य निष्पन्नेन दध्ना प्रतिपदि प्रातः प्रचरेत्। यदि तु न चन्द्रोऽभ्युदियात् तदा तण्डुलैर्दध्यर्धेन च दर्शकर्म निष्पाद्य पृथगवस्थापितेना-र्धान्तरेण ब्राह्मणान् भोजयेत् इति। एवं स्थिते सति यस्य यजमानस्य रात्रावेव फलीकृततण्डुल-पर्यन्तं हविर्निरुप्तं सन्नदितं भवति ततः प्रतीक्ष्यमाणश्चन्द्रमाः पूर्वस्यां दिशि अभ्युदेति स चन्द्र एनं यजमानं प्रजया पशुभिश्च व्यर्धयति, अस्य भ्रातृव्यञ्च वर्धयति। अतोऽभ्युदयं निमित्तीकृत्यैतत्तण्डुलात् मध्यमस्थविष्ठाणिष्ठरूपैस्त्रेधाभिन्नान् तान् पूर्वदेवताभ्यो विभजेत्। विभज्य च दात्रादिगुणकान्यादि-देवताभ्यो हविः कुर्यादिति।

क. चन्द्रमसोऽभ्युदये सति "त्रेधा तण्डुलान् विभजेत्" इति पृथक्कृतानां तण्डुलानां "ये मध्यमा" इत्यादिना देवतासंयोगश्रवणात् "शृते चरुं दधंश्चरुम्" इति शृतदध्नोरधिकरणनिर्देशात्तयोः श्रपणा-र्थत्वात्तण्डुलसाध्यापूर्वगुणविकारा एव यागाः, असोमयाजिन ऐन्द्राग्नविकारौ चरू इति।

अकाले प्रवृत्तं तन्त्रम्, [1]व्यृद्धं हविः तद्भजन्तीति दातृप्रभृतयो **व्यृद्धभाजः।** ताभ्य एव निर्वाप इत्यालेखनमतिः। चन्द्रदर्शनकारितो हि[2] प्राकृतानामपनय इति। काले तु त्रिभागस्त्रेधा तण्डुलानिति ॥ ९ ॥

**विनिरुप्तेऽभ्युदिते प्रा...ताभ्यश्शेषः ॥ १० ॥**

**विनिरुप्तम्** अर्धनिरुप्तम्। तत्र प्राकृतीभ्य एव शेषो निर्वापः, ताः प्रवृत्ता इति। अपनयश्च प्राकृतीनाम् ॥ १० ॥

**तण्डुलभूतेष्वपनयेत् ॥ ११ ॥**

**तण्डुलभूतेषु** सर्वत्राभ्युदयेष्टिरेव[3] ॥ ११ ॥

**यस्यागृहीतं हविरभ्युदियाद्व्रतचर्यां वा नोदाशंसीत। स त्रेधा तण्डुलानिति पूर्ववत्। अथोत्तरस्मै हविषे वत्सानपाकृत्यापवसेत् ॥ १२ ॥**

**अगृहीतम्** अनिरुप्तम्। तत्र चन्द्रदर्शने विकल्प उच्यते। **व्रतचर्या** उपवसथाभ्यासः। तस्य विनिरुप्तस्त्रोच्यते। यदि **नोदाशंसीत** न शक्नुयात्कर्तुम्। स त्रेधा तण्डुलानिति पूर्ववत्कृत्वाऽभ्युदितेष्टिः। [4]पुनरामावास्यं सर्वं करोति। विहरणाद्य-विकृतम्। वत्सापाकरणं पुनरिज्याप्रदर्शनार्थम्। तत्र विधित्रयम्—निरुप्तेऽभ्युदितेष्टिरेव। उपवसथाभ्यासो वा। कृत्वाऽभ्युदियष्टिं पुनरामावास्यमविकृतमिति ॥ १२ ॥

**अथ यस्य गृहीतं हविरभ्युदियात्सैव प्रायश्चित्तिः सा व्रतचर्या ॥ १३ ॥**

**गृहीतं** निरुप्तम्, तत्राभ्युदितेष्टिः[5]। पूर्वेणोपवसथाभ्यासो वा **सैव प्राय-श्चित्तिः। सा व्रतचर्या** अनशनसत्यवचनादि च[6] ॥ १३ ॥

**वत्सान्मातृभिस्संसृज्य पुनरपाकृत्य पूर्वेद्युर्दुग्धं दधि हवि-रातञ्चनार्थं निदध्यात् ॥ १४ ॥**

**वत्सान्मातृभिस्सह संसृज्य** प्रातर्दोहार्थान् [7]सायंदोहार्थे पुनरपाकरणम्। पुनश्च प्रातर्दोहार्थम्। श्वोभूते कृतान्तात्प्रक्रमः। पूर्वमिज्यायां कृतायां यदा ज्ञायते

1. B. 1. यद्द्रव्यं तद्भजत इति.
2. B. 2. omits हि.
3. B. 2. अभ्युदितेष्टिः.
4. B. 2. आमावास्यां सर्वां.
5. B. 2. अभ्युदयेष्टि.
6. B. 2. दिति.
7. B. 2. adds वेलायं after सायंदोह.

दृष्टश्चन्द्रमा इति तदा पुनरिज्यैव । हुत्वा सर्वप्रायश्चित्तम् अकाले कृतमकृतमिति । उपवसथाभ्यासः । [1]उत्पन्नोऽपि प्रातर्दोहः परित्यज्य उत्करे । [क]यद्वै यज्ञस्येत्युपदेशः । न्यायस्तु देवतार्थं गृहीतस्य हविषो वचनमन्तरेण त्यागो न युक्त इति स एवाग्नेयः श्रृतश्च धार्येते[2] । [ख]पुनरन्यदेव क्रियते 'पुनरपाकृत्ये'ति । सायंदोहस्यातञ्चनार्थो भवेत् ॥ १४ ॥

**[1]अग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेद्य आहिताग्निस्सन्नव्रत्यमिव चरेत्प्रवसेद्वा व्रत्येऽहनि मांसं वाश्नाति स्त्रियं वोपैति ॥ १५ ॥**

अग्नये व्रतपतयेऽष्टाकपालः य आहिताग्निर्भूत्वा **अव्रत्यमिव चरेत्**-आहिताग्निर्व्रतलोपं कुर्यात् । तत्र [3]व्रतपतिः । प्रवसति वा व्रत्येऽहनि [4]कृतान्वाधानः । मांसभक्षणे स्त्र्युपगमने च[5] व्रत्य एवाहनि । आहिताग्निवचनाद् ब्राह्मौदनिके व्रतातिपत्तौ अनुक्तप्रायश्चित्तम्[6] । मांसभक्षणादौ न व्रातपती, अनाज्ञा तमेव । अग्नये व्रतपतये, अग्ने-व्रतपते अग्निं व्रतपतिम् अग्नर्व्रतपतेः, अग्निर्व्रतपतिरिदम् । " [2]त्वमग्ने व्रतपा असि " " [3]यद्वो वयं प्रमिनाम " इति ।

[ग]उपदेशः—एतदेवाव्रत्यं प्रवासादि । अहिताग्निव्रतलोपे सर्वप्रायश्चित्तमिति । अबुद्धिपूर्वकं[7] स्कन्ने रेतसि सर्वप्रायश्चित्तमेव ॥ १५ ॥

---

1. B. 2. उत्पत्तेर्नापि.
2. B. 2. धार्यते.
3. B. 2. व्रतपतिदेवता.
4. B. 2. कृत्वाऽन्वाधानम्.
5. B. 2. omits च.
6. B. 2. प्रायश्चित्ते.
7. B. 2. पूर्वं.

क. उपवसथाभ्यासपक्षे उत्पन्नोऽपि प्रातर्दोहः उत्करे त्यज्यते, अकाले कृतस्य हविषोऽकृतत्वात् । 'यद्वै यज्ञियस्य कर्मण' इत्यारभ्य 'उत्करे वाव तस्य प्रतिष्ठा' इति सिद्धवदनुवादादुत्करे त्यागः । सायन्दोहस्यातञ्चनार्थं एव । पूर्वेद्युर्दुग्धं दधि हविरातञ्चनार्थं मिदध्यादिति वचनादिति ।

ख. कालभ्रान्त्या प्रवृत्तेऽपि तन्त्रे देवतार्थं गृहीतस्य त्यागो न युक्तः । अतस्स एवाग्नेयः श्रृतश्च धार्येते । प्रातर्दोहो निर्वृत्तश्चेत्पुनरन्यदेव श्रृतं क्रियते, 'पुनरपाकृत्ये'ति वचनात् पुनस्सायंदोहः प्रातर्दोहश्च क्रियते । पूर्वेद्युर्दुग्धं पञ्चदश्यां सायन्दोहस्यातञ्चनार्थम् । अतःप्रातर्दोहाभ्यां सायन्दोहेन च यागः ।

ग. "आहिताग्निस्सन्नव्रत्यमिव चरेत्" इति श्रुतिगताव्रत्यशब्दस्यार्थविवरणपरमिदं सूत्रम्—'प्रवसेद्वा व्रत्येऽहनि मांसं वाऽश्नाति स्त्रियं वोपैति' इति । अन्वाधाने कृते प्रवासमांसाशनस्त्र्युपगमनानि-अव्रत्यमिति नाहिताग्निव्रतलोप इत्युपदेशमतम् ।

१ तै. सं. २.२.२.२.

२, ३ तै. सं. १.१.१४.४.

**अग्नये व्रतभृतेऽष्टाकपालं यद्यार्तिजमश्रु कुर्यात् ॥ १६ ॥**

**त्वमग्ने व्रतभृच्छुचिर्देवाँ आसादया इह। अग्ने [illegible]व्याय वोढवे ॥**

**व्रतानुबिभ्रद्व्रतपा अदाभ्यो यजा नो देवाँ अजरःसुवीरः। दधद्रत्नानि सुविदानो अग्ने गोपाय नो जीवसे जातवेदः ॥ इति याज्यानुवाक्ये। व्रातभृतीं प्रवास एके समामनन्ति व्रातपतीमश्रु-कर्मणि ॥ १७ ॥**

व्रतमृतेऽष्टाकपालमित्यर्थःपाठः। आर्तिजश्मश्रु यदा दुःखेन व्रत्येऽहनि। अग्नये व्रतभृते, अग्निर्व्रतभृत्, हव्यमग्निं व्रतभृतम्, अग्नेर्व्रतभृतः, अग्निर्व्रतभृदिदम्। प्रवासे वा व्रतभृते, व्रतपतये चाश्रुक्रियायाम् ॥ १६, १७ ॥

**इति चतुर्थी कण्डिका**

**इत्यापस्तम्बश्रौतसूत्रीयधूर्तस्वामिभाष्ये नवमप्रश्ने प्रथमः पटलः ॥ १ ॥**

# द्वितीयः पटलः

यद्यग्निहोत्र्युपसृष्टा वाश्येत यस्माद्भीषा वाशिष्ठास्ततो नो अभयं कृधि। अभयं नः पशुभ्यो नमो रुद्राय मीढुष इति जुहुयादभि वा मन्त्रयेत ॥ १ ॥

अग्निहोत्रहोमार्था धेनुरग्निहोत्री। उपसृष्टा सङ्गता वत्सेन [1]प्रस्नवनार्थेन। सा यदि वाश्येत [2]शब्दं कुर्यात् "यस्माद्भीषा" इति होमः, अभिमन्त्रणं वा ॥ १ ॥

यद्यु वै निषीदेदेतयैव यस्माद्भीषा न्यषद इत्यभिमन्त्र्य '[1]उद स्थाद् देव्यदितिर्विश्वरूप्यायुर्यज्ञपतावधात्। इन्द्राय कृण्वती भागं मित्राय वरुणाय च'॥ इत्युपस्थाप्य तां दुग्ध्वा ब्राह्मणाय दद्याद्य- स्यान्नं नाद्यात्। [2]अवर्तिमेवास्मिन् पाप्मानं प्रतिमुञ्चतीति विज्ञा- यते ॥ २ ॥

निषण्णायामेतयैवेति वचनात्पूर्व एव मन्त्रो न्यषद इति [3]विपरिणीयते। अभिमन्त्रणमेवैतया। निषण्णायां दुग्ध्वा [क]सह क्षीरेण दीयते धेनुः ब्राह्मणाय, यस्यान्नं न भक्षयेत्। अवर्तिः दारिद्र्यम्। [4]तच्च पाप्मानञ्च तस्मिन् ब्राह्मणे स्थापयति [5]प्रयच्छन्। अनियम उत्थापनद्रव्ये। अन्यस्याः पयसा होमः ॥ २ ॥

अथ वा दण्डेन विपिष्याऽविपिष्य वोत्थाप्याऽऽत्मन् कुर्वीत ॥३॥

---

1. B. 3. reads प्रस्नवनाय.
2. B. 2. reads शब्दवती स्यात्.
3. B. 1. and 2. विपरिणतः.
4. B. 2. reads तच्च.
5. B. 2. omits प्रयच्छन्.

क. क्षीरस्यान्यत्र विनियोगाभावात्सह क्षीरेण दानम्। इष्टफलरहिता दक्षिणा दानयोग्या न भवति। तस्माद् दुग्ध्वा क्षीरं ब्राह्मणाय प्रदर्श्य त्वमेवं दुग्ध्वा भुङ्क्ष्वेति दद्यात्। "दुग्ध्वा ददाति न ह्यदुष्टा दक्षिणा दीयते" (तै. ब्रा. १.४.३.३.) इति।

१ तै. ब्रा. १.४.३.१.

२ "अवर्तिं वा एषैतस्य पाप्मानं प्रतिख्याय निषीदति यस्याग्निहोत्र्युपसृष्टा निषीदति। तां दुग्ध्वा ब्राह्मणाय दद्यात्, यस्यान्नं नाद्यात्, अवर्तिमेवास्मिन् पाप्मानं प्रतिमुञ्चति" (तै. ब्रा. १.४.३.२.) इति।

[1]**अथवा दण्डेन** [2]**विपिष्याऽविपिष्य वा** [3]सञ्चूर्णयन्निवोत्थापयेत् तूष्णीम् । पूर्वस्मिंस्तु विनापि दण्डेनाऽऽत्मस्थां करोति । [4]न ददाति ब्राह्मणाय ॥ ३ ॥

**[क]सूयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम । अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ति इति दर्भस्तम्बमालुप्य प्रा(ग्रा)सयेत् ॥ ४ ॥**

सूयवसादिति [5]ग्रास्यदर्भस्तम्बम् । तामेव होमार्थे[6] दोहयति । ([7]**आलुप्य** स्वयमवाच्छिद्य । ग्रासनमन्त्रोऽयं नाच्छेदनमन्त्रः । सर्वप्रायश्चित्तं कृत्वा तस्याः पयसा होमः । ) अन्ये त्वाहुः—न्यषद इत्यभिमन्त्रणम् [क]उत्थापनञ्च । दण्डस्तु विशेषः । 'आत्मन् कुर्वीत' इति [illegible]भात् सर्वविधिप्राप्तिः[ख] ॥ ४ ॥

**यद्यु वै लोहितं दुहीत व्युत्क्रामतेत्युक्त्वा दक्षिणमग्निं परिश्रित्य तस्मिन्नेतच्छ्रपयित्वा तस्मिन् व्याहृतिभिस्तूष्णीं वा हुत्वा तां ब्राह्मणाय दद्याद्यमनागमिष्यः स्यात् ॥ ५ ॥**

**व्युत्क्रामत** [8]अन्यत्र गच्छतेत्यर्थः । होमकर्ता प्रेष्यति यजमानादीन् । लोहिते दुग्धे परिश्रयणम्-वेष्टनं दक्षिणाग्नेः । यथा न दृश्यते पच्यमाने [9]हूयमाने च । **अनभ्यागमिष्यः** [10]स यस्याभ्यागमनं न करोति [11]समीपं न गच्छति । अन्यां [12]दुग्ध्वा होमः कर्तव्यः ॥ ५ ॥

**यदि दुह्यमानं स्कन्देद्'' यदद्य दुग्धं पृथिवीमसक्त यदोषधीरप्यसरद्यदापः । पयो गृहेषु पयो [illegible]सु पयो वत्सेषु पयो**

1. B. 2. reads अपि वा.
2. B. 1. reads only विपिष्य and B. 3. विनिपिष्य.
3. B. 2. reads सञ्चूर्णन्.
4. B. 2. omits न.
5. B. 1. reads ग्राम्यदर्भः and B. 2. reads ग्रास्यदर्भः.
6. B. 2. होमार्थे.
7. ( ) कोष्ठान्तर्गतो भागो B. 1, 2. मातृकयोर्नास्ति ।
8. B. 3. reads विहारादन्यत्र.
9. B. 2. reads श्रपमाणे.
10. B. 2. स यस्यास्य गमनं.
11. B. 2. न समीपं.
12. B. 2. वा दुग्ध्वा.

क. द्वितीयेऽपि पक्ष इति शेषः ।

ख. पूर्वोक्तमङ्गीकृत्य दण्डनियमः आत्मनि स्थापनञ्च विधीयत इति तेषां पक्षः ।

१ खिलमन्त्रोऽयम् । अत्र मैत्रायणीयसंहितायामग्निहोत्रब्राह्मणं द्रष्टव्यम् । 'याऽग्निहोत्रयोपसृष्टा निषीदेत् यस्याश्च नाधात् तस्मै तां दद्यात्' इत्यादि । (मै. सं. का. १. प्र. ८. अ. ९.१.)

**अस्तु तन्मयि " इत्येनदभिमन्त्र्य "[1]समुद्रं वः प्रहिणोमि " इत्यद्भि-रुपसृजेत् ॥ ६ ॥**

[1]दुह्यमाने स्कन्देत् 'यदद्य दुग्धम्' इति स्कन्नाभिमन्त्रणम्। **उपसर्गः** स्कन्नस्योपरिष्टादुदकक्षेपः। 'समुद्रं वः' इति [क]वक्ष्यमाणस्यापवादः। 'अस्कान्' 'उत्तम्भय' इति च स्कान्नाभिमन्त्रणस्योपसर्गस्य[2] च। दुह्यमानेऽनशनन्तु विद्यते '[2]यदि सायं स्कन्देत्' इति। अन्यां दुग्ध्वा पुनर्होमः कर्तव्यः[ख] ॥ ६ ॥

**यदि दुह्यमाना स्थालीमवभिन्द्यान्निर्णिज्यान्यां दुह्यात्तां वैव ॥ ७ ॥**

यदि दुह्यमाना स्थाल्येकदेशं भिनत्ति, प्रक्षाल्य तां स्थालीं दोहनसमर्थामन्यां गां ततो दुह्यात्। [3]तामेव वा-यदि विद्यते तस्यां पयः। [4]सर्वभेदश्चेत्-अन्यपात्रं प्रक्षाल्य[5] तेनोक्तं स्कन्नप्रायश्चित्तम्। दुह्यमानस्य द्रव्योत्पत्त्यर्थं पुनरारम्भः ॥ ७ ॥

**यदि दुह्यमानं दुग्धं ह्रियमाणं हृतमधिश्रीयमाणमधिश्रित-मुद्वास्यमानमुद्वासितमुन्नीयमानमुन्नीतं वा स्कन्देत्तदेव यादृक्कीदृक्च होतव्यमन्यया वाऽभिदोह्यम् ॥ ८ ॥**

**दुह्यमानं** यावद्दोहनक्रिया न [6]परिसमाप्यते। दुग्धं यावन्न नीयते गार्हपत्य-समीपम्। [7]गार्हपत्यसमीपं नीयमानं **ह्रियमाणम्। हृतं** प्रापितम्। **अधिश्रिय-माणम्** आरोप्यमाणम्। **अधिश्रितं** पच्यमानम्। **उद्वास्यमानम्** [8]उत्तीर्यमाणम्।

---

1. B. 2. स्कन्ने.
2. B. 1. उपसर्गकृत्यञ्च
3. B. 2. reads wrongly मागेव
4. B. 2. सर्वभेदने
5. B. 1. omits तेन
6. B. 2. omits परि
7. B. 1. omits गार्हपत्यसमीपं
8. B. 2. omits उत्तीर्यमाणं B. 3. उत्तार्यमाणं

क. 'अस्कान्द्यौः......इति स्कन्नमभिमन्त्र्य 'उत्तम्भय पृथिवीम्' इत्यद्भिरुपस्पृशेत्' (आप. श्रौ. ९.५.७.) इति वक्ष्यमाणस्य।

ख. कृत्स्नस्कन्दने पुनर्होमः। एकदेशस्कन्दने तु सर्वप्रायश्चित्तं कृत्वाऽवशिष्टेन होमः 'यादृक्कीदृक्च होतव्यमि'ति श्रुतेः। स्कन्नद्रव्ये भूमिं प्राप्ते प्रायश्चित्तम्......'पृथिवीं वा एतस्य पयः प्रविशति यस्याग्निहोत्रं दुह्यमानं स्कन्दति' (तै. ब्रा. ३.१.४.३.) इति लिङ्गात्।

१ समुद्रं वः प्रहिणोमि स्वां योनिमपि गच्छत। अच्छिद्रः प्रजया भूयासं मा परा सेचि मत्पयः॥ मन्त्रोऽयं सूत्रकारेण समग्रः कुतो न लिखित इति न प्रतीयते।

२ 'यदि सायं स्कन्देदा होतोः प्रातर्नाश्नीयात्। यदि प्रातरा होतोः सायं नाश्नीयात्' (आप. श्रौ. ९.६.९.) इत्युक्तम्।

**उद्वासितं** [1]यावन्नोन्नीयते। [2]**उन्नीयमानं** यावन्न [3]चतुर्थो गृह्यते। स्रुवः पञ्चमो वा जमदग्नीनाम्। **उन्नीतं** यावन्न नीयते। तस्य स्कन्नस्योत्पत्तिः। तदेव [4]यादृक्कीदृक् वा यावत्तावद्वा[5] अनाहुतिमात्रमपि होतव्यम्। अन्या वा गौः तस्योपरि दोग्धव्या[6]। दुग्धादारभ्य वक्ष्यमाणमभिमन्त्रणम्। उपसर्गोऽनशनश्च सर्वं तत्प्रायश्चित्तम्॥ ८॥

**यदि सकृदुन्नीतं स्कन्देद् द्विस्त्रिर्वा न तदाद्रियेत। यद्यु वै चतुर्थमुन्नीतं स्कन्देत्स्थाल्यां शेषमवनीय चतुरभ्युन्नीय होतव्यमन्यया वाऽभिदोह्यम्॥ ९॥**

[7]सकृदुन्नीते द्विः त्रिर्वा, अनादरवचनान्न स्कन्नप्रायश्चित्तम्। चतुर्थ उन्नीते द्रव्योत्पत्तिः। अन्या वा [8]उन्नीय वा स्कन्देदिति चतुरवत्तिनः। [9]प्राप्त[क] उन्नीयमानमिति पञ्चावत्तिनः। अग्निहोत्रस्थाल्यां स्रुग्गतमानीय पुनर्मन्त्रैः चतुरभ्युन्नीय होतव्यम्। असर्वस्कन्ने चतुरभ्युन्नीयहोमः। सर्वकन्ने अन्या [10]वा गौः स्रुचि दोहनीया। यादृक् कीदृक् चतुर्थ उन्नीतो[11] न लभ्यते, उन्नीतं वा स्कन्देदिति [12]पञ्चावत्तिनो विषयमेतत्॥ ९॥

इति पञ्चमी कण्डिका

[१]**यदि उद्द्रुतस्य स्कन्देत्तन्निषद्य पुनर्गृहीत्वा तदेव यादृक्कीदृक्च होतव्यम्। अथान्यां दुग्ध्वा पुनर्होतव्यम्। अथाज्येन वारुणीमृचमनूच्य वारुण्यर्चा जुहुयात्॥ १॥**

उद्द्रुतं[13] ह्रियमाणम् 'उर्वन्तरिक्षमन्विहि' इति [14]उद्द्रवति। उद्द्रवन् दशहोतारं व्याचष्ट इति यावद्दशहोतृपरिसमाप्तिः तावदुद्द्रुतप्रायश्चित्तम्। **तन्निषद्य** तस्मिन् देश उपविश्य यत्र स्कन्नं तत्पुनर्गृहीत्वा यदि शुचौ देशे पतितम्, तदेव यादृक्कीदृक्च

1. B. 1. reads यावन्न नीयते
2. B. 2. reads उन्नीयमाना.
3. B. 2. चतुर्थे.
4. B. 2. omits यादृक्कीदृक्.
5. B. 2. omits वा.
6. B. 2. reads दोहनीया.
7. B. 2. omits this line.
8. B. 2. उन्नीतं वा.
9. B. 3 omits प्राप्ते.
10. B. 2. omits वा.
11. B. 2. उन्नीते.
12. B. 2. & 3. पञ्चावत्तिविषयं.
13. B. 2. & 3. नीयमानं.
14. B. 3. omits उद्द्रवति.

क. यादृगित्यादिरीत्या प्राप्ते द्रव्य इत्यर्थः।

१ "यद्युद्द्रुतस्य स्कन्देत्। यस्ततो हुत्वा पुनरेयात्, यज्ञं विच्छिन्द्यात्। यत्र स्कन्देत् तन्निषद्य पुनर्गृह्णीयात्। यत्रैव स्कन्दति तत एवैनत्पुनर्गृह्णाति। तदेव यादृक्कीदृक्च होतव्यम्। अथान्यां दुग्ध्वा पुनर्होतव्यम्" इति तैत्तिरीयब्राह्मणम्। (तै. ब्रा. १.४.४.५.)

होतव्यम् । [क]इतरथा प्रतिनिधिना क्रियते । समाप्ते तु मार्जनान्ते होमे विहरणादि कृत्वाऽन्यां दुग्ध्वा पुनः [1]वृष्ट्यन्ते कृते "[1]अवते हेड" इत्युक्त्वा "[2]उदुत्तमम्" इत्याज्यं [2]जुहुयात्। ततो होमसमाप्तिः। उपदेशो यत्र पुनर्होमस्तत्र पूर्वो वृष्ट्यन्तः द्वितीयः [3]परिसमाप्यते दोहनादि। वृष्ट्यन्ते होमः, [4]उपस्थानादि च–हुत्वाऽप उपस्पृश्येति अग्निहोत्रे[5] वचनात्॥ १॥

**यदि प्राचीनं स्कन्देत्तदेव यादृक्कीदृक् च होतव्यमन्यया वाऽभिदोह्यम् ॥ २ ॥**

**प्राचीनं** प्रागगामि। स्वाहाग्नय [6]इत्यादि, यावद्दर्भसमीपं [7]न प्राप्नोति। यादृक्कीदृक्चेति द्रव्योत्पत्तिः। वक्ष्यमाणमेव प्रायश्चित्तं सर्वत्र। यत्राऽप्युक्ता पुनरिज्या आज्यहोमश्च तत्राप्यविरोधात्समुच्चयः वक्ष्यमाणेन प्रायश्चित्तेनाऽनशनान्तेन ॥ २ ॥

**अथैकेषाम्—यदि प्राचीनं ह्रियमाणं स्कन्देत् "प्रजापतेर्विश्वभृति तन्वं हुतमसि स्वाहा" इत्येनदभिमन्त्र्यैतदेवाग्निहोत्रं स्यादित्याश्मरथ्यः। अन्यां दुग्ध्वा पुनर्होतव्यमित्यालेखनः॥ ३ ॥**

[8]**प्राचीनं ह्रियमाणं** नीयमानं यावद्दर्भसमीपं न प्राप्नोति। पूर्वेण[ख] विकल्पिते 'स्वाहाग्नये वैश्वानराय वाताय त्वे'ति। अत्र तु पूर्वमेव ह्रियमाणमिति विशेषितत्वात्। 'प्रजापतेः विश्वभृति' इत्यभिमन्त्रणप्रत्याम्नायः[ग]। उपसर्गोऽनशनश्च क्रियेते[9]। एतावदेव स्रुक्छेषो[10]ऽग्निहोत्रहोमार्थं भवतीत्याश्मरथ्यमतिः। पुनर्होमः स्रुक्छेषेण

---

1. B. 2. होमे कृते.
2. B. 1. reads आज्यन्तु B. 3. आज्याहुतिं.
3. B. 1. & 2. समाप्यते.
4. B. 2. उपस्थानानि.
5. B. 3. अग्निहोत्रवचनात्.
6. B. 1. अग्नये वैश्वानरायेत्येवमादि.
7. B. 1. omits न.
8. B. 3. omits प्राचीनं.
9. B. 1. & 2. क्रियते.
10. B. 2. शेषं.

क. अशुचावुपादानाशक्तौ च प्रतिनिधिना होमः।

ख. शाखान्तरविहितत्वादस्य पूर्वेण विकल्पिते।

ग. 'अस्कान्द्यौः पृथिवी स्कयतामस्कानृषभो युवागाः। स्कन्नेमा विश्वा भुवना स्कन्नो यज्ञः प्रजनयतु। अस्कानजनि प्राजन्या स्कन्नाज्जायते वृषा। स्कन्नात्प्रजनिषीमहि,॥ इत्यस्य प्रत्याम्नायः।

१ अव ते हेडो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः।
क्षयन्नस्मभ्यमसुर प्रचेतो राजन्नेनाꣳसि शिश्रथः कृतानि॥

२ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमꣳश्रथाय।
अथावयमादित्य व्रते तवानागसो अदितये स्याम॥ (तै. सं. १.५.११.३.)

समाप्तिं कृत्वा अन्यां दुग्ध्वा [1]पुनर्होतव्यमित्यालेखनमतिः। सर्वत्र पुनरिज्यासु[2] विहरणादि-साङ्गस्यावृत्तिः।

[क]उपदेशः—' 'प्रजापतेर्विश्वभृति ' इति पूर्वाहुतिस्थानेऽभिमन्त्रणम्। [3]प्राणनादि व्याहृतिजपान्तं सर्वं कृत्वोत्तराहुत्यादि। एवंलक्षणमतद्मिहोत्रं स्यादित्याश्मरथ्यमतिः। पुनर्होम इत्यालेखनमतिः॥ ३॥

**यदि पुरः पराहृतं [illegible] चतुरभ्युन्नीय होतव्य-मन्यया वाऽभिदोहः॥ ४॥**

'पुरः पराहृतं दर्भसमीपमानीतं[5] साद्यमानञ्च। तेष्वनुदाहृत्य स्रुक्समीपं स्थालीमाहृत्य, [6]उन्नीय च [ख]पुरुषधर्मेण। चतुरिति प्रदर्शनार्थम्। ततो होमः, अभिदोहनं वा। केचित्-अनुदाहृत्येति स्रुचं नयन्ति स्थालीसमीपं[7] पुनश्चागच्छन्ति [8]मन्त्रैः॥ ४॥

**यदि पुर उपसन्नं स्कन्देत्तदेव या[illegible]हक्च [illegible]तव्यमन्यया वाऽभिदोहम्॥ ५॥**

उपसन्नं दर्भेषु स्थापितं यदि स्कन्दति॥ ५॥

**अथकेषा[illegible]—यदि पुर उपसन्नमहुतं स्कन्देत्तदेव यादृक्कीदृक्च होतव्यम्। अथान्यां दुग्ध्वा पुनर्होतव्यम्। अथाज्येन [illegible]ति समान[illegible]॥ ६॥**

**उपसन्नमहुतं** दर्भेषु स्थापितम्। होमार्थं [9]स्वगृहीते, दर्भेषु च स्थापिते पूर्वमिदं वा प्रायश्चित्तम्। होमार्थे गृहीत इदमेव। यादृक्कीदृक्च हुत्वा पुनर्होमः।

1. B. 2. होतव्यः.
2. B. 1. पुनरिज्या.
3. B. 2. reads प्राणादि सर्वं
4. B. 1. पुनः
5. B. 2. reads नीतं for आनीतं
6. B. 2. चतुरभ्युन्नीय
7. B. 2. समीपं पश्चादागच्छति
8. B. 2. omits मन्त्रैः.
9. B. 1. & 2. च गृहीते.

क. ' प्रजापतेरि 'त्यभिमन्त्रणं कृत्वा तत उत्तराहुत्यादि। ' एतदेवाग्निहोत्रम् ' इत्येतच्छब्देन प्रजापते-रित्यभिमन्त्रणमेव परामृश्यते। अत एवंलक्षणमग्निहोत्रमित्युपदेशपक्षे आश्मरथ्यमतिः। अभि-मन्त्रणात्मक एव होम इति तात्पर्यम्।

ख. चतुरवत्तिपञ्चावत्तिनां स्वस्वसंख्ययाऽभ्युन्नयनम् चतुरित्यस्य प्रदर्शनार्थत्वात्।

१ ' प्रजापतेर्विश्वभृति तन्वं हुतमसीति तत्र स्कन्नामिमर्शनम् ' ' शेषेण जुहुयाद् ' ' पुनरन्वी-याशेषे ' इत्याश्वलायनः। ( आश्व. श्रौ. पूर्वषट्के ११. ११-१३ )

[क]वारुणी च पूर्ववत् । द्रव्योत्पत्तिरुक्ता ॥ ६ ॥

**"[1]अस्कान्द्यौः पृथिवीमस्कानृषभो युवा गाः । स्कन्नेमा विश्वा भुवना स्कन्नो यज्ञः प्रजनयतु ॥ अस्कानजनि प्राजन्या स्कन्नाज्जायते वृषा । स्कन्नात्प्रजनिषीमहि" इति स्कन्नमभिमन्त्र्य '[2]उन्नम्भय पृथिवीम्' इत्यद्भिरुपसृजेत् ॥ ७ ॥**

स्कन्नप्रायश्चित्तमुच्यते—अस्कानिति । द्वाभ्यामभिमन्त्र्य 'उन्नम्भय' इत्य**द्भिरुपसृजेत्**[1] [2]तन्मिश्रयेत् ॥ ७ ॥

**यदनाहुतिमात्रं विप्रुडेव सा ॥ ८ ॥**

**अनाहुतिमात्रं** स्रुवादूनम्, [ख]अङ्गुष्ठपर्वमात्राद्वा, तत्र न स्कन्नप्रायश्चित्तम्, विप्रुट्तुल्यत्वात् ॥ ८ ॥

**यदि सायं स्कन्देदा होतोः प्रातर्नाश्नीयात् । यदि प्रातरा होतोस्सायं नाश्नीयात् ॥ ९ ॥**

सायं स्कन्ने **आ होतोः** प्रातर्होमात्[3] नाश्नीयात् । प्रातः स्कन्ने **आहोतोः सायम्** । उभयत्राऽ[4]भिविधिः । [5]हुते प्रातर्होमे अशनं [6]कार्यम् । सायं स्कन्ने हुते सायमग्निहोत्रेऽशनम्, प्रातः स्कन्ने च । [7]सर्वाग्निहोत्रद्रव्याणां [8]स्कन्नानामेष विधिः । यत्राभिदोहनं तत्र तज्जातीय[9]द्रव्यस्य क्षेपः ॥

**दिव्या वा एतमशनिरभ्यवैति [3]यस्याग्निहोत्रं शिरिशिराभवति । समोषामुमिति ब्रूयाद्यं द्विष्यात् ॥ १० ॥**

---

1. B. 1. अद्भिरुपसृज्य.
2. B. 2. omits तन्मिश्रयेत्.
3. B. 2. omits होमात्.
4. B. 1. reads उभयत्रापि.
5. B. 2. reads कृते.
6. B. 2. omits कार्यं.
7. B. 1. reads सर्वार्थाग्निः.
8. B. 2. reads एष स्कन्नविधिः.
9. B. 1. तज्जातीयस्य, B. 2. सजातीयस्य.

क. 'अवते हेड' उदुत्तमम्' इत्याज्यहोमः, स्कन्नेषु यादृक्तादृग्योगः, अभिदोहनमुभयनत्र ।
ख. पुरोडाशादिद्रव्यपरमिदम् ।

१ तै. ब्राह्म. ३.७.१०.३.
२ उन्नम्भय पृथिवीं भिन्धीदं दिव्यं नभः ।
उद्नो दिव्यस्य नो देहीशानो विसृजा दृतिम् ॥
३ 'अग्निहोत्रं शरशरायत्समोषामुमिति द्वेष्टारमुदाहरेत्' ( आश्व. श्रौ. पूर्वार्धे ११.१९. )

दिवि भवा **दिव्या अशनिर्विद्युत्**। **एतं** यजमानमभिगच्छति यस्याग्निहोत्र-द्रव्यं [1]**शिरिशिरा भवति** पच्यमानं शब्दं करोति, तत्र प्रायश्चित्तम्—समोषामुमिति आहाध्वर्युः। [2]अमुमिति यं द्वेष्टि यजमानः तस्य नाम गृह्णते[3]। सर्वत्राऽग्निहोत्रेऽधिश्रिते यावन्नोत्तार्यते[4] तावदेव तत्[5] प्रायश्चित्तम्। अन्यत्र सर्वप्रायश्चित्तम्। अन्ये त्वाहुः—अधिश्रयणाद्या परिसमाप्तेरेतत्प्रायश्चित्तमिति ॥ १० ॥

**[1]गार्हपत्येऽग्निहोत्रेऽधिश्रिते श्वाऽन्तराग्नी धावेद्गार्हपत्याद्भस्मादाय "[2]इदं विष्णुर्विचक्रम" इति गार्हपत्यादाहवनीयाद्ध्वंसयन्नुद्द्रुत्यैतयैव भस्मना शुनः पदमपि वपेत् ॥ ११ ॥**

**श्वाऽन्तरा** गार्हपत्याहवनीययोः **धावेत्** गच्छेत् गार्हपत्याद्भस्म गृहीत्वा "इदं विष्णुर्विचक्रम' इति गार्हपत्यादारभ्य, आहवनीयं तावत् **ध्वंसयन्** [6]कुम्पयन् भस्मना गच्छति। एतयैवर्चा भस्मना **शुनःपदमपि वपेत्** प्रकिरेत्। [क]श्रुतेर्नात्र स्मार्तमुदकोक्षणम्[7] न गोभिराक्रमणम्[8], निन्दनात्[9] भस्मनैव शौचम् ॥ ११ ॥

**यस्याग्निमनाहृतं सूर्योऽभिनिम्रोचेद्यत्र तप्यमानं परापश्येत्तत आहृत्यैनं प्रविशानीति वैष आधीयते ॥ १२ ॥ इति दक्षिणाग्नेरनुगतस्याधानकल्पः ॥ १३ ॥**

**अनाहृतम्** [10]नानीतम् दक्षिणाग्निं **सूर्योऽभिनिम्रोचेत्** अस्तमियात्।

1. B. 2. reads शिशिरा.
2. B. 2. omits अमुमिति.
3. B. 2. reads विह्वते.
4. B. 2. उत्तीर्यते.
5. B. 1. तावद्वेतत्.
6. B. 2. कम्पयन्.
7. B. 2. क्षेपणम्.
8. B. 2. गोराक्रमणं.
9. B. 3. निदानात्.
10. B. 3. अनानीतं

क. 'यद्ग्रामन्वत्यावर्तयेत्, रुद्राय पशूनपिदध्यात्, अपशुर्यजमानः स्यात्। यदपोऽन्वतिषिञ्चेत्, अनाद्यमग्नेरापः, आनाद्यमाभ्यामपिदध्यात्' (तै. आ. १.४.४.६.) इति श्रुतौ शुनो मार्गेण गामतिनीय पुनरावर्तयेत्तदानीमग्नेः क्रूरत्वेन रुद्ररूपत्वात्तस्मै रुद्राय यजमानपशून् समर्पयेत्, यजमानश्च पशुरहितस्स्यात्, यदि च शुनः पदे जलं निषिञ्चेत् तर्हि तज्जलमग्निरनाद्यत्वेन गार्हपत्याहवनीयाभ्यां समर्पयेत् इति गोराक्रमणस्योदकोक्षणस्य च निन्दनात् भस्मनैव शौचम् इति।

१ तै. आ. १.४.४.६.

२ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पाँसुरे ॥ (तै. सं. १.२.१३.१.)

[क]अनाहार्यम्[1], **यत्र** यस्मिन् देशे **दीप्यमानं** ज्वलन्तं **पश्येत्तत** आहृत्याग्निं करोति 'एतं प्रविशानि' इति। अनेन मन्त्रेण इति **वैष आधीयते** स्थाप्यते। एषा श्रुतिः। कस्याग्नेरजाहृतस्येति न ज्ञायते। सूत्रकारो [2]व्याचष्टे—दक्षिणाग्नेरनाहृतस्यैषा श्रुतिरिति। दीप्यमानादग्नेरग्निमानीय 'एतं प्रविशानि' इत्यनेन मन्त्रेण स्थापयितव्य इति न [ख]सभ्यावसथ्ययोः। यदा [3]वाऽनुगच्छति दक्षिणाग्निस्तस्य [4]चायं विधिरेतं प्रविशानीति। आधानकल्पेन[5] स्थापनविधिरिति। अन्ये त्वाहुः—आधानकल्प आधानविधिरिति यैराहितोऽन्याधेये तैरेव पुनः स्थाप्यत इति।

उपदेशः—यत्र दीप्यमानं परापश्येत्तत आहृत्य आहर्तव्य इत्येतावत्। अनाहृते एतं प्रविशानीति वैष आधीयत इत्येतावता अनुगतस्य स्थापनं दक्षिणाग्नेः॥ १२, १३॥

**यस्याग्निमनुद्धृतं सूर्योऽभिनिम्रोचेत्॥ १४॥**

[6]अनुद्धृतमाहवनीयम्, अभिनिम्रोचेत् अस्तमियात्सूर्यः॥ १४॥

## इति षष्ठी कण्डिका

**[1]दर्भेण हिरण्यं प्रबध्य पुरस्ताद्धरेत्। अन्वङ्ङार्षेयो ब्राह्मणो बहुविदग्निमुद्धरेत्। अन्वङ्ङग्निहोत्रेणानूद्द्रवेत्। आयतने हिरण्येऽग्निं प्रतिष्ठाप्य नित्यमग्निहोत्रमुपसाद्यातमितोरप्राणान्नासित्वा समन्य हुत्वा भूर्भुवस्सुवरित्युपस्थाय वारुणं चरुं निर्वपेत्॥ १॥**

**दर्भेण हिरण्यं** [7]**प्रबध्य** बध्वा सुवर्णं **पुरस्ताद्धरेत्** अग्नेः [ग]कश्चित्। **अन्वङ्** अनुमार्गेण तस्य हिरणस्य [8]पश्चात्। **आर्षेयः** यः [9]स्वानृषीन्वेद बहुविच्च।

---

1. B. 1. & 3. आहार्यं.
2. B. 1. reads अध्याचष्टे.
3. B. 2. च.
4. B. 2. वा.
5. B. 2. कल्पस्थापनविधिः.
6. B. 2. अनुद्धृताहवनीये.
7. B. 1. omits प्रबध्य.
8. B. 1. & 2. omit पश्चात्.
9. B. 1. reads तान्.

क. 'अहरहरेनं दक्षिणत आहरन्ति' इत्येतन्न कार्यमित्यर्थः।

ख. यत्र क्वापि दीप्यमानं शुचिभूतमग्निमनेन मन्त्रेणाग्नौ दक्षिणाग्नौ प्रवेशनं सङ्कल्प्य स्थापयेत्। अनेन मन्त्रेण स्थापनं वा। 'इति वैष आधीयत' इति ब्राह्मणम्, तस्य वाक्यशेषो 'दक्षिणाग्नेः' इति सूत्रम्। अतो दक्षिणाग्नेरयमाधानकल्पः सभ्यावसथ्ययोर्न भवति।

ग. अग्नेः पुरस्तात्कश्चिद्ब्राह्मणो हरेदिति सम्बन्धः।

1 तै. ब्रा. १.४.४.१.

[क]अन्ये त्वाहुः—'आर्षेय उद्धरेत्' इति [1]तस्य व्याख्या बहुविदिति। [ख]सोमविद्धुवित् चतुर्होतृविद्वा[2] 'स ह्येव भूयो वेद' इति श्रुतेः। बहुविदः पश्चादध्वर्युरग्निहोत्रेण सह गच्छेत्। [3]कर्म गार्हपत्यदक्षिणाग्न्योः सभ्यावसथ्ययोश्च कर्तव्यम्। [ग]यदि नाहवनीयात्, शुन्धनान्तम्। परिस्तरणान्तं वा [4]यदि सर्वान् परिस्तृणाति। दुग्धायां गवि पत्न्याश्चोपविष्टायां परिषिच्य [घ]द्वावग्नी, [5]उपवेषादानादि समिदुपरिधारणान्तम्। [6]यत्रतत्रस्थो यजमान उन्नयनप्रैषमाह, [7]नाभिमीलिते तिष्ठति च 'उद्धरे' त्याह बहुविदम्[8]। ततस्स [ङ]उद्धरति 'वाचात्वे'ति। उद्ध्रियमाणे चाभिमन्त्र्य[9] 'उर्वन्तरिक्षं वीहि[10]' इत्युद्द्रवत्यध्वर्युः। बहुविदा पूर्ववत्स्थापिते हिरण्येऽग्नौ नित्यमकाम्यं पयः तदस्मिन्होमे नियम्यते [11]पूर्ववृत्तं नित्यमिति।

केचित्तदुपसाद्य पूर्ववत्सभिदाधानादि परिस्तरणान्तं [12]करोति आहवनीयस्य। ततोऽपरेणाहवनीयं यजमानो [13]निष्क्रम्याचामति 'विद्युदसी'ति। केचित्पूर्वमाचामति यजमानसंस्कार इति। इहातिक्रामत्येवोपस्थानार्थम्। ततोऽध्वर्युः परिषिच्याहवनीयं धाराञ्च कृत्वा [14]विद्युदसीत्यादि जपान्तम्। **आतमितोः** आतमनात्। यावच्छ्रान्तो[15] भवति

1. B. 2. omits तस्य व्याख्या बहुविदिति.
2. B. 2. चतुर्होतृविद्वान्, B. 1. होतृविद्वा.
3. B. 1. omits कर्म.
4. B. 1. omits यदि.
5. B. 2. परिवेष.
6. B. 1. यत्रस्थः.
7. B. 2. मीलिते.
8. B. 2. बहुविद्.
9. B. 2. अभिमन्त्रिते.
10. B. 2. वीहीत्यध्वर्युः.
11. B. 3. reads पूर्वप्रवृत्तं
12. B. 2. omits करोत्याहवनीयस्य, ततः.
13. B. 3. अतिक्रम्य.
14. B. 2. & 3. विद्युदसीत्यादि...जपान्तं कृत्वा.
15. B. 2. तान्तः.

क. 'आर्षेय उद्धरेत्' (तै. ब्रा. १.४.४.२.) इति ब्राह्मणगतस्यार्षेयशब्दस्य व्याख्या सूत्रकारेण बहुविदिति क्रियत इति।

ख. 'प्रजापतिरकामयत प्रजास्सृजेय' इति प्रश्नद्वयस्यार्थम्, 'ब्रह्म वै चतुर्होता' इत्यनुवाकार्थञ्च यो जानाति स सोमविच्चतुर्होतृविच्च।

ग. यद्याहवनीयात्सभ्यावसथ्ययोरुत्पत्तिर्नास्ति, तर्हि शुन्धनान्तं परिस्तरणान्तं वा कर्तव्यमिति सम्बन्धः।

घ. दक्षिणाग्नेर्भिन्नयोनित्वे। एकयोनित्वे त्वाहवनीयोद्धरणादूर्ध्वं दक्षिणाग्नेः प्रणयनात्पूर्वं गार्हपत्यस्यैव परिषेचनम्। सभ्यावसथ्ययोर्भिन्नयोनित्वेऽपि परिषेचनाभावः, गार्हपत्यादीनां त्रयाणामेव परिषेचनस्योपदेशादिति।

ङ. 'ब्राह्मण आर्षेय उद्धरेत्, ब्राह्मणो वै सर्वा देवताः (तै. ब्रा. १.४.४.२.) इति ब्राह्मणात् यावतीर्वै देवतास्तास्सर्वा वेदविदि ब्राह्मणे वसन्ति' इति श्रुत्यन्तराच्च सर्वदेवताकर्तृकमिदमुद्धरणम्। अतो बहुविदुद्धरतीति।

तावदप्राणन् अनुच्छ्वसन्नासित्वा समन्य उच्छ्वस्य हुत्वा 'अग्निर्ज्योति'रिति, वृष्टयन्ते [1]भूर्भुवस्सुवरित्युपस्थायाध्वर्युस्समाप्य होमं, वारुणं चरुं करोति । अनन्तरं [2]विद्युदुद्धरणादि । यदा तु नक्तधारणपक्षस्तदा तस्मिन्नेवाग्नौ । केचित्त्वसति साक्षाद्वचने रात्रौ करणं नेच्छन्ति "[क]न सायमस्ति देवया अजुष्टम्' इति लिङ्गात् ॥ १ ॥

**व्रातभृतीं द्वितीयामेके समामनन्ति ऋते हिरण्यात्प्रणयनमेके ॥ २ ॥**

[3]द्वितीयेष्टिः[ख] अग्नये व्रतभृते एकेषां मतेन[4] । "अवते हेड" "उदुत्तमम्" इति वरुणस्योक्ते । व्रतभृतः "[1]त्वमग्ने व्रतभृत्" इति । [5]हिरण्यप्रणयनवर्जम् । समानमन्यत् ॥ २ ॥

**यदि सायमग्निहोत्रकालोऽतिपद्येत "दोषा वस्तोर्नमः स्वाहा" इति कालसमापादनीयं होमं कृत्वा नित्यमग्निहोत्रमुपसाद्या तमितोरप्राणन्नासित्वा समन्य हुत्वा भूर्भुवः सुवरित्युपतिष्ठेत ॥ ३ ॥**

निशायां [6]व्यतीतायां सायंकालातिपत्तिरनापदि,[ग] सङ्कल्पितकालातिपत्तौ वा । अन्यः कालो येन सम्पद्यते स कालः [7]समापादनीयः । तं हुत्वा [8]गोदोहनादि । नित्यमग्निहोत्रमुपसाद्येत्युक्तार्थम् । उपस्थाने कृतेऽविकृतो होमस्समाप्यते ॥ ३ ॥

**यदि प्रातः 'प्रातर्वस्तोर्नमस्स्वाहा' इति कालसमापादनीयं होमं हुत्वा नित्यमग्निहोत्रमुपसाद्या तमितोरप्राणन्नासित्वा समन्य हुत्वा भूर्भुवस्सुवरित्युपतिष्ठेत ॥ ४ ॥**

---

1. B. 2. उत्थाय.
2. B. 1. reads विहरणादि.
3. B. 1. omits द्वितीयेष्टिः.
4. B. 3. reads मते.
5. B. 3. अहिरण्यस्य.
6. B. 1 omits व्यतीतायां
7. B. 2. सम्पादनीयः.
8. B. 2. omits गो.

क. देवया देवयागः । गकारलोपश्छान्दसः । अजुष्टम् असेवितम् । यस्मादजुष्टं न सेवितं रात्रौ देवैः तस्माद्रात्रौ नेष्टिः कर्तव्या ।

ख. श्वोभूते द्वितीयेष्टिः ।

ग. अनापदि मुख्यकालेऽग्निहोत्राकरणे कालातिपत्तिः । प्रवृत्ते प्रदोषादिसङ्कल्पितकाले होमाकरणेऽपि कालातिपत्तिः । आपदि तु प्रवृत्तस्यापि 'यत्पूर्वरात्र' इत्यादिविधानान्न कालातिपत्तिरिति ।

१ त्वमग्ने व्रतभृच्छुचिः । देवा [*]आसादया इह । अग्ने हव्याय वोढवे ॥ तै. ब्रा. २.४.१.११.

**वरो दक्षिणा ॥ ५ ॥**

[क]सङ्गवे व्यतीते प्रातः कालातिपत्तिः । [1]सङ्कल्पितकालातिपत्तौ वा 'आदित्यान्नमस्स्वाहा' इति होमः । समिदाधानादि पूर्ववत् । अङ्गान्यपि तदानीं होमकाले कर्तव्यानीति । सायं होमे तु [ख]दोहनमस्तमिते । पत्न्युपवेशनादि होमकाले । व्याहृतिभिरुपस्थाय वरदानमध्वर्योः 'हुत्वा' इति वचनात् ॥ ४,५ ॥

**हुत्वाऽऽहवनीयमुद्धृत्यान्वग्निः उषसामग्रमख्यत् इत्यन्यं प्रणीय "इहैव क्षेम्य एधि मा प्रहासीन्माऽमुमामुष्यायणम्" इत्यादित्यमुपस्थाय मैत्रं चरुं निर्वपेत् ॥ ६ ॥**

परिसमाप्ते आहवनीयानुगमनम्[2] । 'अन्वग्निः' इत्यन्यस्याहवनीयस्य प्रणयनम् । इष्टिः सायंहोमार्थस्य । 'मा प्रहासीन्मा' 'देवदत्तं वात्स्यम्' इत्यादित्योपस्थानम् । [3]जीवत्सु पूर्वपुरुषेषु वात्स्यायनमिति । वारुणमैत्रसौर्या आग्नेयविकाराः । [4]वृक्षवच्च विभक्तयः । "[1]अयं मित्रः" "[2]अनमीवासः" इति मित्राय ॥ ६ ॥

**सौर्यमेककपालमेके समामनन्ति ॥ ७ ॥**

"उदुत्यं" "चित्रम्" इति [5]सूर्याय । एककपालधर्मा वैशेषिकाः । नव प्रयाजानूयाजाः, पृषदाज्यं बर्हिरादि सर्वमिति केचित् । य आग्रयणे वैशेषिक आम्नातस्स एव तस्य लिङ्गदर्शनादितरस्यादर्शना[6]दित्यापस्तम्बमतिः ॥ ७ ॥

**संस्थितायामिष्ट्यामाहवनीयमेवैतदहरिन्धानावनश्नन्तौ वाग्यतावासाते यजमानः पत्नी च ॥ ८ ॥**

---

1. B. 1 reads सङ्कल्पकालातिपत्तौ.
2. B. 2. adds केचित् after अनुगमनम्.
3. B. 1. जीववत्सु पुरुषेषु.
4. B. 2. omits वृक्षवच्च to अनूयाजाः.
5. B. 2. सौर्यस्य.
6. B. 1. reads ब्राह्मणस्तमन्वार्षेयः.

क. 'सङ्गवान्तः प्रातः' इत्याश्वलायनः ।

ख. 'अस्तमिते दोग्धि' इति तस्य स्वकालत्वात् ।

१ अयं मित्रो नमस्यस्सुशेवो राजा सुक्षत्रो अजनिष्ट वेधाः ।
तस्य वयꣳ सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ॥

२ अनमीवास इडया मदन्तः मितज्ञवो वरिमन्ना पृथिव्याः ।
आदित्यस्य व्रतमुपक्षियन्तः वयं मित्रस्य सुमतौ स्याम ॥ (तै. ब्रा. २.८.७.५.)

**संस्थितायां** मैत्र्यां सौर्येष्टौ[1] वा **आहवनीयमेव** न दक्षिणाग्निम्, आहार्य-मेतदहः । सायंहोमार्थमिन्धनम्[2] । प्रातर्होमेऽन्यः प्रणीयते । अन्यत्र त्वहर्ग्रहणेन [3]रात्रि-ग्रहणेन वाऽहोरात्रयोर्ग्रहणं परिसमाप्तं भवति । इन्धनं पुनःपुनः [4]क्षिपति । सायं होमे दक्षिणाग्न्यादिरन्यः ॥ ८ ॥

**द्वयोः पयसा पूर्ववत्सायमग्निहोत्रं जुहुयात् ॥ ९ ॥**

द्वयोः पयसाऽग्निहोत्रम् । [5]अग्निहोत्रस्थाल्या पूर्वामिति पूर्ववत् ॥ ९ ॥

**यस्याग्निमनुद्धृतं सूर्योऽभ्युदियाच्चतुर्गृहीतमाज्यं पुरस्ताद्धरेत् । अन्वङ्ङार्षेयो ब्राह्मणो बहुविदग्निमुद्धरेत् । अन्वङ्ङग्निहोत्रेणानु-द्द्रवेत् । आयतनेऽग्निं प्रतिष्ठाप्य " उषाः केतुना जुषतां यज्ञं देवेभिर-न्वितम् । देवेभ्यो मधुमत्तमं स्वाहा " इति प्रत्यङ् निषद्याज्येन जुहुयात् ॥ १० ॥**

**अभ्युदियात्** अनुद्धृत आहवनीये उदयं कुर्यात । चतुर्गृहीतमाज्यं जुह्वा-मानीयाहवनीयस्य पुरस्ताद्धरेत् । [6]तमन्वङ् ब्राह्मण आर्षेय आहवनीयेन सह, तमन्वग्निहोत्रेण सहाध्वर्युः पूर्ववत् कर्म । स्थापित आहवनीये " उषाः केतुना " इति प्रत्यङ्मुख उपविश्याज्यं जुहुयात् [क]येनानीतम् । ततः पूर्ववत्समिदाधानादि ॥ १० ॥

**अग्निहोत्रस्य स एव होमकल्पः । तत्प्रायश्चित्तं यत्प्रातः कालातिपन्नस्य ॥ ११ ॥**

नित्यमग्निहोत्रमुपसाद्येत्येवमादि स एव होमकल्पः । कालसमापादनीयहोमवर्जम् । उपस्थानवरदाने कृत्वा होमपरिसमाप्तिः । आदित्योपस्थानादि । द्वयोः पयसा [7]होमान्तम् । तदेव प्रायश्चित्तं यत्प्रातःकालातिपत्तौ ॥ ११ ॥

**एतावन्नाना । नात्राहवनीयमनुगमयति ॥ १२ ॥**

[8]एतावन्नानाभावः । नात्राहवनीयस्यानुगमनम् । अग्निहोत्राहवनीय एव मैत्रादि ॥ १२ ॥

---

1. B. 1. इतरस्य न स्यादिति.
2. B. 2. सौर्येष्ट्यां
3. B. 2. मन्यत्र.
4. B. 2. omits रात्रिग्रहणेन.
5. B. 2. क्षिप्तः.
6. B. 2. omits अग्निहोत्रस्थाल्या पूर्वामिति ।
7. B. 1. reads अग्निहोत्रं.
8. B. 2. एवं नानाभावः.

क अध्वर्योरग्निहोत्रधारणे व्यापृतत्वादन्येनाहरणस्य दृष्टार्थत्वात् तेन होमः कर्तव्यः ।

**अथैकेषाम् । यस्याग्निमनुद्धृतं सूर्योऽभिनिम्रोचेदभ्युदियाद्वा ॥ १३ ॥**

अन्येषां शाखिनां मतिः ॥ १३ ॥

इति सप्तमी कण्डिका

**" [1]मनो ज्योतिर्जुषताम् " " [2]त्रयस्त्रिंशत्तन्तवः " इति द्वे चतुर्गृहीते जुहुयात् ॥ १ ॥**

" मनो ज्योतिर्जुषताम् " इत्येकं चतुर्गृहीतं [1]हुत्वा " त्रयस्त्रिंशत् " इति द्वितीयम् अग्निहोत्रार्थ एव [2]विहृतेऽग्नौ, तदङ्गत्वात् । [क]इष्टयस्तु तन्त्रभिन्नाः । [3]तस्मात्तासामन्योऽग्निः । [ख]केचित्तु हुत्वा प्रायश्चित्तमग्निहोत्रार्थं प्रणयनम् । शाखान्तरस्थो विधिः विकल्प्यते सर्वत्र न [ग]समुच्चीयते ॥ १ ॥

**यस्य विप्रक्रान्तमहुतमग्निहोत्रं सूर्योऽभ्युदियाद्यथा विजनिष्यमाणो न विजनिष्यमाणो न विजायेत तादृक् तत् । आत्मानं वा ह यजमानो रुणद्धि सर्वज्यानिं वा जीयते । नित्यमग्निहोत्रमुपसाद्या तमितोरप्राणन्नासित्वा समन्य हुत्वा भूर्भुवस्सुवरित्युपतिष्ठेत । एकहायनो दक्षिणा ॥ २ ॥**

---

1. B. 3. reads गृहीत्वा.
2. B. 1. reads विहिते.
3. B. 2. तासामन्योऽग्निस्तस्मात्.

क. इमौ चतुर्गृहीतहोमौ अग्निहोत्रार्थमुद्धृत एवाग्नौ कार्यौ, तयोरग्निहोत्राङ्गत्वेन भिन्नतन्त्रत्वाभावात् । इष्टयस्तु भिन्नतन्त्राः । अतोऽन्यतरमुत्पादनीयम् ।

ख. हुत्वा प्रायश्चित्ताहुतिद्वयं पुनरग्निहोत्रार्थं प्रणयन्ति केचित् ।

ग. प्रतिपत्तिभेदेन निरपेक्षोपदेशान्न समुच्चयः । अयमत्र निष्कर्षः—आपदि होमकालातिपत्तौ अनुद्धृतप्रायश्चित्तहोमद्वयं बहुविदुद्धरणं वा कृत्वाऽग्निहोत्रहोमः । अनापदि होमकालातिपत्तौ अनुद्धृतप्रायश्चित्तं कालसमापादनीयञ्च कृत्वाऽग्निहोत्रहोमः । अत्रानुद्धृतप्रायश्चित्ताहुती द्वे एवेति केचित्, इतरस्य विरोधात् । तथाहि—प्रातःकालातिपत्तौ आहवनीयानुगमस्याङ्गत्वाच्चतुर्गृहीतमाज्यं पुरस्तादित्यत्र, नात्राहवनीयमनुगमयतीति तन् निषेधात् विरोधः । अन्ये त्वयं विरोधः प्रातःकाले, सायंकाले तु विरोधाभावाद्बहुविदुद्धरणमपि विकल्पेन कर्तव्यमित्याहुः । होमकालविशेषे सङ्कल्पितेऽनुद्धृते तत्कालातिपत्तौ अनुद्धृतप्रायश्चित्तं कालसमापादनीयञ्च कर्तव्यमिति ।

१ मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञं समिमं दधातु ॥
बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्ताम् ॥ (तै. स. १.५.३.२.)

२ त्रयस्त्रिंशत्तन्तवो ये वितत्निरे य इमं यज्ञꣳ स्वधया ददन्ते ॥
तेषां छिन्नं प्रत्येतद्दधामि स्वाहा घर्मो देवाꣳ अप्येतु ॥ (तै. सं. १.५.१०.४.)

**विप्रक्रान्तम्** आरब्धमनुदिते होष्यामीति । [क]समिदाधानादि । [ख]परिषेचनादी-त्युपदेशः । अहुतायाश्च पूर्वाहुतौ सूर्य उदेति, **यथा विजनिष्यमाणो** प्रसूयमानो **न [1]विजायेत तादृक्तत्** । अग्निहोत्रमार्तिगतं मन्येताध्वर्युः । [ग]यद्वाऽग्निहोत्र-होमोऽनर्थकः । यजमानो रुणद्धि [2]आध्मायन्तेऽस्य स्रोतांसि । [घ]सन्निरोधं प्राप्नोति । **सर्व-ज्यानिः** सर्वस्वहानिः । नित्यमग्निहोत्रमिति पूर्ववदुपस्थानान्तम् । **एकहायनः** एकवर्षः । [3]सा **दक्षिणा** अध्वर्योः ॥ २ ॥

**हुत्वा तदुद्वास्य पुनराधेयं तस्य प्रायश्चित्तिरित्याश्मरथ्यः ॥३॥**

हुत्वा घृष्टयन्तात्परं [4]होमं समाप्य तदुद्वास्य तत्परित्यज्य विधानेनाग्निजातं पुनराधेयं [5]प्रायश्चित्तिः । अनन्तरं [6]न वर्षासु । अन्याधेयमपि लभ्यते आलेखनमतादित्युपदेशः[ङ] ॥ ३ ॥

**अथैकेषाम्—[1]यद्यन्ते स्यादुद्गीय प्राङुदाद्रवेत् । स उपसाद्या तमितोरासीत । स यदा ताम्येदथ भूः स्वाहेति जुहुयात् । प्रजापतिर्वै भूतस्तमेवोपासरत्स एवैनं तत उन्नयति नार्तिमार्च्छति यजमान इति विज्ञायते ॥ ४ ॥**

---

1. B. 2. विजायते.
2. B. 1. आधीयन्ते तस्य.
3. B. 2. स.
4. B. 2. omits होमं.
5. B. 2. प्रायश्चित्तं.
6. B. 1. omits न.

क. अनुदिते होष्यामीति सङ्कल्प्य होमात्प्रागुदिते समिदाधानादि । उदितानुदितहोमयोः प्रणयनस्यानुदिते कर्तव्यत्वादुदितहोमे प्रणयनादूर्ध्वमुदयस्यावश्यम्भावात्प्रक्रान्तमग्निहोत्रमिति निमित्तत्वानुपपत्तिः । समिदाधानादेस्तु पूर्वकालस्याविधानाद्धोमसमानकालत्वादनुदितहोमे सङ्कल्पिते प्राग्घोमादभ्युदये वक्ष्यमाणनैमित्तिकं भवतीति ।

ख. समिदाधान-शुन्धन-परिस्तरणानामनियतकालत्वात्परिषेचनादेर्नित्यवद्धोमसमानकालत्वात्तदूर्ध्वमुदये नैमित्तिकमित्युपदेशमतम् ।

ग. आर्तिगतत्वात्क्रियमाणोऽप्यग्निहोमो निष्प्रयोजनः ।

घ. अग्निहोत्राकरणेन यजमानस्य स्रोतांसि मूत्रपुरीषादीनि आध्मायन्ते ऊच्छूनानि भवन्ति । तेन यजमानस्तेषां सन्निरोधं प्राप्नोति ।

ङ. 'यस्य वोभावनुगतौ' इत्यत्र पुनराधेयश्रुतेरन्याधेयेऽपि तुल्यतया आलेखनव्याख्यानादिह सूत्रानुक्तोऽपि स पक्षः कर्तव्य इत्युपदेशमतम् ।

1 तै. ब्रा. २.१.९.३.

[1]अथैकेषाम् । अस्मच्छाखामाह सूत्रकारः । तेन [2]खाण्डेयानधिकृत्य कृतं सूत्रम् । **यद्यन्ते स्यात्** यदि समीपे यजमानस्स्यात् । [3]स **उन्नीय स्वयं प्राङुदाद्रवेत्** [4]गच्छेदाहवनीयं प्रति **स उपसाद्य** व्याहृतिजपान्तं कृत्वा । **आ तमितोः** [5]आश्रमोपजननात्तिष्ठेत् । श्रान्तो [6]भूत्वा भूःस्वाहेति पूर्वाहुतिं जुहुयात् । प्रकृतिवदुत्तरा इत्यादि । प्रजापतिर्वै भूतो नित्यजातः [7]तमेवोपासरत् तमुपागच्छच्छरणम् । तस्य होमं कुर्वन् स एवैनं तत उन्नयति तस्माद् दोषादुद्धरति । 'नार्तिमाप्नोति यजमानः' इति श्रुतिः । नात्राग्नित्यागः । प्राजापत्यं हविः प्रजापतिः प्रजामित्यूहः । परतोऽप्युन्नयनादौ असन्निहिते [8]यजमाने एतत्प्रायश्चित्तम् । उन्नयनादित्युपदेशः[क] ॥ ४ ॥

**यस्याग्निहोत्रं विच्छिद्येत द्व्यहे त्र्यहे चतुरहे वाग्नये तन्तुमतेऽष्टाकपालं निर्वपेत् ॥ ५ ॥**

विच्छिन्नेऽ[9]ग्निहोत्रहोमे एकाहे द्व्यहे च ब्राह्मणोक्तमपि लभ्यते "[ख]उतैकाहमुत द्व्यहं न [10]जुह्वति" इति । परतश्च त्रिरात्रादग्न्याधेयमेव, अग्निहोत्रस्याग्निप्रत्यर्थत्वात् । अग्नये तन्तुमते, अग्ने तन्तुमन्, अग्निं तन्तुमन्तम्, अग्नेस्तन्तुमतः, अग्निस्तन्तुमानिदम् ॥ ५ ॥

**[2]स्वयं कृण्वानः सुगमप्रयावं तिग्मशृङ्गो वृषभः शोशुचानः । प्रत्नं सधस्थमनुपश्यमान आ तन्तुमग्निर्दिव्यं ततान । त्वं नस्तन्तुरुत सेतुरग्ने त्वं पन्था भवसि देवयानः । त्वयाऽग्ने पृष्ठं वयमारुहेमाथा देवैः सधमादं मदेमेति याज्यानुवाक्ये ॥ ६ ॥**

"स्वयं कृण्वानः सुगम्" "त्वं नस्तन्तुः" इति प्रधानस्य ॥ ६ ॥

---

1. B. 1 reads अथैकेषामित्यस्माच्छाखा.
2. B. 2. reads खाण्डिकेयान्.
3. B. 1. तदुन्नीय.
4. B. 2. अनुगच्छेत्.
5. B. 2. आश्रमाद्यजमान.
6. B. 2. omits भूत्वा.
7. B. 1. उपासरेत्तमुपागच्छेत्.
8. B. 2. reads सन्निहिते लक्ष्यत एतत्.
9. B. 2. अग्निहोत्रस्य.
10. B. 1. जुहोति.

क. उन्नयनादिनैमित्तिकनिर्देशान्नित्यमग्निहोत्रमित्यादिपूर्वो विधिरसन्निहिते यजमान इत्युपदेशमतम् ।

ख. "तस्माद्यस्यैवं विदुषः उतैकाहमुत द्व्यहं न जुह्वति हुतमेवास्य भवति" इति वचनादग्निहोत्रब्राह्मणार्थविदुष आपदि होमचतुष्टयाकरणेऽपि न दोष इति ।

१ तै. ब्रा २.१.७.५.

२ तै. ब्रा. २.४.२ ५.

**"[1]तन्तुं तन्वन्" "[2]उद्बुध्यस्वाग्ने" "[3]उदुत्तमम्" "[4]उद्वयं तमसस्परि" "[5]उदुत्यं" "[6]चित्रम्" इत्युपहोमाः ॥ ७ ॥**

"तन्तुं तन्वन्" "उद्बुध्यस्वाग्ने[1]" "उदुत्तमम्" "उद्वयं तमसस्परि" "उदुत्यं" "चित्रम्" इत्युपहोमाः षडेते ॥ ७ ॥

**हव्यवाहमभिमातिषाहं रक्षोहणं पृतनासु जिष्णुम् । ज्योतिष्मन्तं दीद्यतं पुरन्धिमग्निं स्विष्टकृतमाहुवेम ॥ स्विष्टमग्ने अभि तत्पृणाहि विश्वा देव पृतना अभिष्या उरुं नः पन्थां प्रदिशन्वि भाहि ज्योतिष्मद्धेह्यजरं न आयुरिति सांयाज्ये ॥ ८ ॥**

नारिष्ठान् हुत्वा 'हव्यवाहं स्विष्टम्' इति स्विष्टकृतः । यद्यग्निर्ध्रियते[2] तत एतत्प्रायश्चित्तम् । अनुगते भूयोऽनुगमनप्रायश्चित्तं पुनराधेयमग्न्याधेयं वा ॥ ८ ॥

इत्यष्टमी कण्डिका

इत्यापस्तम्बीयश्रौतसूत्रीयधूर्तस्वामिभाष्ये द्वितीयः पटलः ॥

---

1. B. 2. reads इत्यादिकान् षडुपहोमान् हुत्वा नारिष्ठान्.
2. B. 2. reads यद्यग्निर्ध्रियत एतत्प्रायश्चित्तमन्यथा पुनराधेयमग्न्याधेयं वा ।

१ तन्तुं तन्वन्रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान् ।
अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनम् ॥ (तै. सं. ३.४.२.२.)

३ उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥ (तै. सं. १.५.११.३.)

४ उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ (तै. आ. २.४.४.९.)

५ उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥

६ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आ प्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥ (तै. सं. १.४.४३.१.)